अस्मिन् ग्रन्थे सूत्राणि स्थूलाक्षैरुपन्यस्तानि। वार्तिकानि त्वित्थं भूते ( ) कोष्ठके मुद्रितानि सन्ति। (ग० सू०) इति गणसूत्राणां संकेतः (प०) इति च परिभाषाया इत्यादि सम्यग् विवेचनीयम्।

अत्रास्माकं प्रमादवशाद् यद्यशुद्धयोऽवशिष्टा भवेयुस्तर्हि करुणावशंवदा विद्वांसो मानवस्वभावमाकलय्य क्षमन्तां सूचयन्तु च ता यतोऽग्रिमे संस्करणे संशोधयितुं प्रयतिष्यामह इति शिवम्। इति—

निवेदयते विदुषां विधेयो

रामनारायणदत्तपाण्डेयः
(गीताप्रेस, गोरखपुर)



शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्।
हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम्॥

॥ श्रीगणेशाय नमः ॥

# लघुसिद्धान्तकौमुदी

[1]नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम्।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम्॥

## अथ संज्ञाप्रकरणम्

अइउण् १। ऋऌक् २। एओङ् ३। ऐऔच् ४। हयवरट् ५। लण् ६। ञमङणनम् ७। झभञ् ८। घढधष् ९। जबगडदश् १०। खफछठथचटतव् ११। कपय् १२। शषसर् १३। हल् १४॥

[2]इति माहेश्वराणि [3]सूत्राण्य[4]णादिसंज्ञार्थानि। [5]एषामन्त्या इतः।

---

एकद्वित्रिचतूरूपामरूपां बहुरूपिणीम्।
गिरं नत्वा गिरं ज्ञातुं क्रियते लघुटिप्पणी॥

१-अहं वरदराजाचार्यः शुद्धां दोषरहितां गुण्यां प्रशस्तगुणयुक्तां सरस्वतीं देवीं वाग्देवतां नत्वा नमस्कृत्य पाणिनीयप्रवेशाय बालानां पाणिनीयव्याकरणशास्त्रे प्रवेशार्थं लघ्वी चासौ सिद्धान्तकौमुदी ताम् करोमि इत्यन्वयः॥

२-इति इमानि पूर्वोक्तानि चतुर्दशसूत्राणि माहेश्वराणि महेश्वरादागतानि महेश्वरवरप्रसादात् पाणिनिना लब्धानीति फलितोऽर्थः। तदुक्तम्—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥ इति॥

किं चात्र—

'येनाक्षरसमाम्नायमधिगम्य महेश्वरात्'

—इति शिक्षावचनमपि प्रमाणम्॥ ३-सभेदं सूत्रलक्षणं यथा—

संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥ इति॥

अणादिसंज्ञार्थतया शिवसूत्राण्यपि संज्ञासूत्राण्येवेति बोध्यम्॥ ४-किमर्थानि इमानि? अत उक्तम्—अणादीति। अण् आदिर्यासां ता अणादयस्ताश्च ताः संज्ञा अणादिसंज्ञास्ता अर्थः प्रयोजनं येषां तानि अणादिसंज्ञार्थानि॥ ५-ननु कथंकारमेषां सूत्राणामणादिसंज्ञार्थत्वम्? इति चेत्तत्राह—एषामिति; एषां चतुर्दशसूत्राणामन्ते भवा अन्त्या

[१]हकारादिष्वकार उच्चारणार्थः। [२]लण्मध्ये त्वित्संज्ञकः॥

**हलन्त्यम् १। ३। ३॥**

उपदेशेऽन्त्यं हलित्स्यात्। [३]उपदेश आद्योच्चारणम्। [४]सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र॥

**अदर्शनं लोपः १। १। ६०॥**

[५]प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्॥

**तस्य लोपः १। ३। ९॥**

तस्येतो लोपः स्यात्। [६]णादयोऽणाद्यर्थाः।

**आदिरन्त्येन सहेता १। १। ७१॥**

[७]अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् यथाऽणिति

---

अन्तिमाश्चतुर्दशवर्णा इत इत्संज्ञका इत्यर्थः; ततश्च 'आदिरन्त्येन—' इति सूत्रप्रवृत्त्या अणादिसिद्धिरिति तत्रैव स्पष्टीकरिष्यते॥

१–'हयवरट्' इत्यादिसूत्रेषु हकारादिप्रतिवर्णोत्तरमकारोच्चारणेन हशादिप्रत्याहारे अकारसहिता एव हकारादयो गृह्येरन्निति शङ्कामपाकरोति—हकारादिष्विति; अयं भावः, यद्यपि तत्र तत्र प्रत्याहारेऽकारसहितास्त उच्चार्यन्ते तथापि तेष्वकारो न विवक्षितः॥ २–पूर्ववाक्येन लणोऽकारस्योच्चारणार्थत्वमुपपद्यतेऽत आह—लंण्मध्ये त्विति; लण्मध्यवर्ती अकारस्तु इत्संज्ञको नोच्चारणार्थः। इत्संज्ञाफलं च दर्शयिष्यते—'लण्सूत्रस्थावर्णेन' इत्यादिना॥

३–पाणिनिकात्यायनपतञ्जलिकर्तृकं प्रथममुच्चारणमित्यर्थः। केचित्तु उपदेशपदार्थमित्थमाहुः—

धातुसूत्रगणोणादिवाच्यलिङ्गानुशासनम्।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः॥ इति॥

४–ननु सूत्राधीना वृत्तिः, सूत्रं तु हलन्त्यमित्येतावन्मात्रम्, वृत्तावुपदेश इति कथनमधिकमित्याशङ्क्याह—सूत्रेष्विति; सूत्रेषु यत्पदं न दृष्टं तदन्यस्मात्सूत्रादनुवर्तनीयम् इति सर्वत्र ज्ञेयम्॥ ५–विद्यमानस्येत्यर्थः॥ ६–ननु यदि 'अइउण्' इत्यादिसूत्रेषु णकारादीनामित्संज्ञालोपौ क्रियेते तर्हि तदुच्चारणमेव न कार्यमित्यत आह—णादय इति; णकारादयो लकारपर्यन्ताः सूत्रान्त्यवर्णा अणादिप्रत्याहारार्थाः॥ ७–यथाऽण्प्रत्याहारे साधनीयेऽन्त्य इत् णकारः, तत्सहित आदिः अकारोऽर्थाद् अणिति, तद् अण्पदमकारणकारयोर्मध्यवर्तिनः 'इ उ' इति वर्णद्वयस्य संज्ञा स्वरूपस्याकारस्य च। तदेवाह 'यथाऽणिति' इत्यादिना॥

अइउवर्णानां संज्ञा। एवमच्हल्अलित्यादयः*॥

[1]ऊकालोऽज्झ्रस्वदीर्घप्लुतः १। २। २७॥

उश्च ऊश्च ऊ३श्च वः; वां काल इव कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात्। [2]स प्रत्येकमुदात्तादिभेदेन त्रिधा॥

[3]उच्चैरुदात्तः १। २। २९॥

[4]नीचैरनुदात्तः १। २। ३०॥

[5]समाहारः स्वरितः १। २। ३१॥

[6]स नवविधोऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा॥

[7]मुखनासिकावचनोऽनुनासिकः १। १। ८॥

---

* प्रत्याहाराणामकारादिक्रमेण परिसंख्या—

| | | | | | |
|---|---|---|---|---|---|
| १ अक् | ८ अश् | १५ ऐच् | २२ जश् | २९ भष् | ३६ रल् |
| २ अच् | ९ इक् | १६ खय् | २३ झय् | ३० मय् | ३७ वल् |
| ३ अट् | १० इच् | १७ खर् | २४ झर् | ३१ यञ् | ३८ वश् |
| ४ अण् | ११ इण् | १८ ङम् | २५ झल् | ३२ यण् | ३९ शर् |
| ५ अण् | १२ उक् | १९ चय् | २६ झश् | ३३ यम् | ४० शल् |
| ६ अम् | १३ एङ् | २० चर् | २७ झष् | ३४ यय् | ४१ हल् |
| ७ अल् | १४ एच् | २१ छव् | २८ बश् | ३५ यर् | ४२ हश् |

महेश्वरसूत्रसिद्धानां सवार्तिकपाणिनिसूत्रव्यवहृतानामेव प्रत्याहाराणामियं संख्येति बोध्यम्॥

१-एकमात्रिकोकारोच्चारणकालसदृशकालकोऽच् ह्रस्वसंज्ञः, द्विमात्रिकोकारोच्चारणकालसदृशकालकोऽच् दीर्घसंज्ञः, त्रिमात्रिकोकारोच्चारणकालसदृशकालकोऽच् प्लुतसंज्ञ इति भावः॥ २-स लब्धह्रस्वादिसंज्ञकोऽच्॥ ३-ताल्वादिषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तः॥ ४-ताल्वादिषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तः॥ ५-उदात्तत्वानुदात्तत्वयोरेकत्र समाहारो यत्र सोऽच् स्वरितः॥ ६-स लब्धोदात्तादिसंज्ञकः॥ ७-मुखेन सहिता मुखसहिता, सा चासौ नासिका च मुखनासिका, उच्यतेऽसाविति वचनः, मुखनासिकया वचन इति विग्रहः॥

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। [1]तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। लृवर्णस्य द्वादश तस्य दीर्घाभावात्। एचामपि द्वादश तेषां ह्रस्वाभावात्*॥

[2]तुल्यास्यप्रयत्नं सवर्णम् १। १। ९॥

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् (ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्)। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च[3]। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्।

---

१–पूर्वोक्तैः 'ऊकालोऽज्–' इत्यादिभिः पञ्चभिः सूत्रैर्यत्कार्यमुक्तं तदित्थमनेन प्रकारेण ज्ञेयमित्यर्थः॥

* अचामष्टादशभेदविवरणम्—

| अ इ उ ऋ लृ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ लृ ए ओ ऐ औ |
|---|---|---|
| ह्रस्वभेदाः। | दीर्घभेदाः। | प्लुतभेदाः। |
| १ उदात्तानुनासिकः | ७ उदात्तानुनासिकः | १३ उदात्तानुनासिकः |
| २ उदात्ताननुनासिकः | ८ उदात्ताननुनासिकः | १४ उदात्ताननुनासिकः |
| ३ अनुदात्तानुनासिकः | ९ अनुदात्तानुनासिकः | १५ अनुदात्तानुनासिकः |
| ४ अनुदात्ताननुनासिकः | १० अनुदात्ताननुनासिकः | १६ अनुदात्ताननुनासिकः |
| ५ स्वरितानुनासिकः | ११ स्वरितानुनासिकः | १७ स्वरितानुनासिकः |
| ६ स्वरिताननुनासिकः | १२ स्वरिताननुनासिकः | १८ स्वरिताननुनासिकः |

२–अस्यन्ति उच्चारयन्ति वर्णान् अनेनेति आस्यम्, आस्ये भवमास्यं प्रकृष्टो यत्नः प्रयत्नः आस्यं च प्रयत्नश्च आस्यप्रयत्नौ तुल्यावास्यप्रयत्नौ यस्य तत्तुल्यास्यप्रयत्नम्॥

३–चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते॥

जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य*। यत्नो द्विधा—आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा—स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायां तु विवृतमेव। बाह्यप्रयत्नस्त्वेकादशधा—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खरो विवाराः श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्प-प्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। कादयो मावसानाः स्पर्शाः। यणोऽन्तःस्थाः। शल ऊष्माणः। अचः स्वराः।† ≍क ≍ख।

* वर्णोद्भवस्थानकोष्ठकम्—

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ<br>क<br>ख<br>ग<br>घ<br>ङ<br>ह<br>: | इ<br>च<br>छ<br>ज<br>झ<br>ञ<br>य<br>श | ऋ<br>ट<br>ठ<br>ड<br>ढ<br>ण<br>र<br>ष | लृ<br>त<br>थ<br>द<br>ध<br>न<br>ल<br>स | उ<br>प<br>फ<br>ब<br>भ<br>म<br>≍प<br>≍फ | ञ<br>म<br>ङ<br>ण<br>न<br>ं | ए<br>ऐ | ओ<br>औ | व | ≍क<br>≍ख | वर्णाः |
| कण्ठः | तालु | मूर्धा | दन्ताः | ओष्ठौ | नासिका | कं.ता. | कं.ओ. | दं.ओ. | जि.मू. | स्थानानि |

१–बाह्यप्रयत्ना यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथापि वर्णानामान्तरतम्य-परीक्षायामेषामुपयोगो बोध्यः॥

†आभ्यन्तरबाह्यप्रयत्नज्ञानार्थकं कोष्ठकम्—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| आभ्यन्तर-प्रयत्नाः | स्पृष्टाः | | | ईषत्स्पृष्टाः | ईषद्विवृताः | | विवृताः | संवृताः |
| संज्ञाः | स्पर्शाः | | | अन्तःस्थाः | ऊष्माणः | | स्वराः | |
| वर्णाः | क ख<br>च छ<br>ट ठ<br>त थ<br>प फ | ग ङ<br>ज ञ<br>ड ण<br>द न<br>ब म | घ<br>झ<br>ढ<br>ध<br>भ | य<br>व<br>र<br>ल | श<br>ष<br>स | ह | अ इ उ<br>ऋ लृ ए<br>ओ ऐ औ | ह्रस्वोऽकारः प्रयोगे |
| बाह्यप्रयत्नाः | अ.प्रा.म.प्रा.<br>विवाराः<br>श्वासाः<br>अघोषाः | अल्पप्राणाः<br>संवाराः<br>नादाः<br>घोषाः | म.प्रा.<br>संवाराः<br>नादाः<br>घोषाः | अ.प्रा.<br>संवाराः<br>नादाः<br>घोषाः | म.प्रा.<br>विवाराः<br>श्वासाः<br>अघोषाः | म.<br>सं.<br>ना.<br>घो. | उदात्तानुदात्तस्वरिताः | |

इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः। ᳵप ᳵफ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ॥

**अणुदित्सवर्णस्य चाप्रत्ययः १। १। ६९॥**

प्रतीयते विधीयत इति प्रत्ययः। अविधीयमानो[1]ऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण[2] णकारेण। कु चु टु तु पु एते उदितः। तदेवम्—अ इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं लृकारोऽपि। एचो द्वादशानाम्। अनुनासिकाननुनासिकभेदेन यवला द्विधा;[3] तेनाननुनासिकास्ते द्वयोर्द्वयोस्संज्ञाः॥

**परः संनिकर्षः संहिता १। ४। १०९॥**

वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात्॥

**हलोऽनन्तराः संयोगः १। १। ७॥**

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः॥

**सुप्तिङन्तं पदम् १। ४। १४॥**

सुबन्तं तिङन्तं च पदसंज्ञं स्यात्॥

इति संज्ञाप्रकरणम्।

*****

१-विधीयमानोऽण् आदेशप्रत्ययागमरूपस्तद्भिन्नोऽण् उद्देश्यभूतः स स्वसवर्णस्य संज्ञा इत्यर्थः॥

२-अत्रेदं प्रमाणम्—

परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः।
ऋतेऽणुदित्सवर्णस्येत्येदेकं परेण तु॥ इति॥

३-यँ य् वँ व् लँ ल् इत्येवंरूपेणेति बोध्यम्; तेन हेतुना निरनुनासिका यरादिषु पठितास्ते यवला द्वयोर्द्वयोर्ग्राहका भवन्तीत्यर्थः।

# अथाच्सन्धिः

**इको यणचि ६। १। ७७॥**

इकः स्थाने यण् स्यादचि संहितायां विषये। सुधी उपास्य इति स्थिते॥

**तस्मिन्निति निर्दिष्टे पूर्वस्य १। १। ६६॥**

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम्॥

**स्थानेऽन्तरतमः १। १। ५०॥**

प्रसङ्गे सति सदृशतम आदेशः स्यात्। सुध्य् उपास्य इति जाते॥

**अनचि च ८। ४। ४७॥**

अचः परस्य यरो द्वे वा स्तो न त्वचि। इति धकारस्य द्वित्वेन सुध्ध्य् उपास्य इति जाते॥

**झलां जश् झशि ८। ४। ५३॥**

स्पष्टम्। इति पूर्वधकारस्य दकारः॥

**संयोगान्तस्य लोपः ८। २। २३॥**

संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्॥

**अलोऽन्त्यस्य १। १। ५२॥**

षष्ठीनिर्दिष्टोऽन्त्यस्याल आदेशः स्यात्। इति यलोपे प्राप्ते—(यणः प्रतिषेधो वाच्यः।) सुद्ध्युपास्यः[1]। मद्ध्वरिः[2]। धात्त्रंशः[3]। लाकृतिः[4]॥

**एचोऽयवायावः ६। १। ७८॥**

---

१–'सुधी+उपास्यः' इति स्थिते 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'स्थानेऽन्तरतमः' इति सूत्रद्वयसहकारेण 'इको यणचि' इति सूत्रेण धकारेकारस्य यकारे 'अनचि च' इत्यनेन धकारस्य द्वित्वे 'झलां जश् झशि' इति पूर्वधकारस्य दकारे 'अदर्शनं लोपः' इति लोपसंज्ञायाम् अवगतायाम् 'अलोऽन्त्यस्य' इत्येतत्सहकारेण 'संयोगान्तस्य लोपः' इत्यनेन यकारस्य लोपे प्राप्ते 'यणः प्रतिषेधो वाच्यः' इति तन्निषेधे वर्णसम्मेलने च कृते 'सुद्ध्युपास्यः' इति सिद्धम्, द्वित्वाभावे 'सुध्युपास्यः' इति; अस्य 'पण्डितैराराधनीयः' इत्यर्थः। एवं 'दद्ध्यानय, मद्ध्वरिः,' इत्याद्यपि ज्ञेयम्॥ २–मधुदैत्यशत्रुर्भगवान् विष्णुः॥ ३–ब्रह्मणो भागः॥ ४–लृकारो देवजातीनां माता तस्या आकृतिः स्वरूपम्॥

एचः क्रमादय् अव् आय् आव् एते स्युरचि॥

**यथासंख्यमनुदेशः समानाम् १। ३। १०॥**

[1]समसम्बन्धी विधिर्यथासंख्यं स्यात्। हरये। विष्णवे। [2]नायकः। [3]पावकः॥

**वान्तो यि प्रत्यये ६। १। ७९॥**

यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गव्य[4]म्। नाव्य[5]म्। ([6]अध्वपरिमाणे च) गव्यूतिः॥

**अदेङ् गुणः १। १। २॥**

अत् एङ् च गुणसंज्ञः स्यात्॥

**तपरस्तत्कालस्य १। १। ७०॥**

[7]तः परो यस्मात्स च [8]तात्परश्चोच्चार्यमाणसम[9]कालस्यैव संज्ञा स्यात्॥

**आद्गुणः ६ । १ । ८७॥**

अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्। [10]उपेन्द्रः। [11]गङ्गोदकम्॥

**उपदेशेऽजनुनासिक इत् १। ३। २॥**

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात्। [12]प्रतिज्ञानुनासिक्याः पाणिनीयाः। [13]लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा॥

**उरण् रपरः १। १।**

---

१-सम्बन्धिन उद्देश्या एचो विधेया अयादयस्त उभय एव चत्वारश्चत्वारस्तुल्य-संख्याः, तत्रैकारा क्रमेणायादयः॥ २-'अधिभूर्नायको नेता' इत्यमरः॥ ३-'कृशानुः पावकोऽनलः' (अग्निः) इत्यमरः॥ ४-गोर्विकारो दध्यादिः॥ ५-नौकया तार्यम्—तरणीयं जलम्॥ ६-गोशब्दौकारस्य यूतिशब्दे परेऽवादेशो लोकेऽपि भवति मार्गपरिमाणे गम्ये। गव्यूतिरिति क्रोशद्वयस्य संज्ञा॥ ७-अस्योदाहरणम् 'अतो भिस ऐस्' इति॥ ८-अस्योदाहरणम् 'अदेङ् गुणः, वृद्धिरादैच्' इति॥ ९-अत्र पूर्वसूत्रात् सवर्णस्येत्यनुवर्तनात् समकालस्य सवर्णस्य संज्ञा इत्यर्थः, तेन हरिभिरित्यत्र भिस ऐस् न॥ १०-विष्णुः॥ ११-गङ्गाजलम्॥ १२-प्रतिज्ञा आनुनासिक्यं येषां ते तथोक्ताः पाणिनिप्रभृतिप्रोक्ता ये वर्णास्ते प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः॥ १३-लण् च तत् सूत्रं तत्र तिष्ठतीति लण्सूत्रस्थः स चासाववर्णश्च तेन सह उच्चार्यमाण इत्यर्थः। एवं च 'उरण् रपरः' इत्यत्र रशब्दो प्रत्याहारबोधकस्तेन रलयोर्ग्रहणं सिद्धम्।

ऋ इति त्रिंशतः संज्ञेत्युक्तम्। तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते। कृष्णर्द्धिः[1]। तवल्कारः॥

**लोपः शाकल्यस्य ८। ३। १९॥**

अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे॥

**पूर्वत्रासिद्धम् ८। २। १॥**

सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्। हर इह[2], हरयिह[3]। विष्ण इह, विष्णविह॥

**वृद्धिरादैच् १। १। १॥**

आदैच्च वृद्धिसंज्ञः स्यात्॥

**वृद्धिरेचि ६। १। ८८॥**

आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्[4]। गङ्गौघः[5]। देवैश्वर्यम्[6]। कृष्णौत्कण्ठ्यम्[7]॥

**एत्येधत्यूठ्सु ६। १। ८९॥**

अवर्णादेजाद्योरत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्[8]। उपैति[9]। उपैधते[10]। प्रष्ठौहः[11]। एजाद्योः किम्? उपेतः। मा भवान्प्रेदिधत्[12]। अक्षौहिणी[13] सेना (प्रादूहोढोढ्येषैष्येषु) (अक्षादूहिन्यामुपसंख्यानम्)। प्रौहः[14]। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः। (ऋते च तृतीयासमासे)। सुखेन ऋतः सुखार्तः[15]। तृतीयेति किम्? परमर्तः[16]। (प्रवत्सतरकम्बल-वसनार्णदशानामृणे)। प्रार्णम्[17], वत्सतरार्णम्[18], इत्यादि[19]॥

---

१-कृष्णस्य समृद्धिः॥ २-'आद्गुणः' इति गुणे प्राप्ते यलोपस्यासिद्धत्वान्न भवति, एवमन्यत्र॥ ३-हे हरे! विष्णो! अस्मिन् स्थाने स्थितो भव इति शेषः॥ ४-कृष्णस्यैकरूपता॥ ५-गङ्गाया जलस्य वेगः॥ ६-देवानामैश्वर्यम्॥ ७-कृष्णस्य कृष्णे वा उत्कण्ठा॥ ८-अवर्णाद् एजादिः 'इण्' धातुः 'एध' धातुश्च यत्र परः एवमवर्णाद् यत्र ऊठ् परस्तत्र पूर्वपरयोर्वृद्धिरेकादेशः॥ ९-समीपं गच्छति प्राप्नोति वा॥ १०-निकटे वृद्धिशीलो भवति॥ ११-दमनकाले स्कन्धरोपितकाष्ठवाहको वत्सः प्रष्ठवाडित्युच्यते, अथवा प्रष्ठमग्रेसरं वहतीति प्रष्ठवाट् तस्य षष्ठ्यन्तं रूपं प्रष्ठौह इति॥ १२-न भवान् वृद्धिं करोतु॥ १३-'पूर्वपदात् संज्ञायामगः' इति णत्वम्। महाभारतेऽक्षौहिणीप्रमाणं यथा—रथाः २१८७०, गजाः २१८७०, अश्वाः ६५६१०, पदातयः १०९३५०—इयती सेनाक्षौहिणी॥ १४-प्रौहादिशब्दानां क्रमेणार्थः—प्रकृष्टस्तार्किकः। वृद्धिं गतः। प्रौढता। प्रेषणम्। दासः॥ १५-सुखेन गतः। अस्य परमो मुक्तोऽर्थः॥ १६-परमश्चासावृतश्चेति कर्मधारयः, न तु तृतीयातत्पुरुष इति भावः। १७-प्रकृष्टम् ऋणम्॥ १८-वत्सतरनिमित्तकम् ऋणम्॥ १९-आदिपदात् कम्बलार्णम्,

**उपसर्गाः क्रियायोगे १। ४। ५९॥**

[१]प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः। प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप—एते प्रादयः॥

**भूवादयो धातवः १। ३। १॥**

[२]क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः॥

**उपसर्गादृति धातौ ६। १। ९१॥**

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। [३]प्रार्च्छति॥

**एङि पररूपम् ६। १। ९४॥**

आदुपसर्गादेङादौ धातौ पररूपमेकादेशः स्यात्। [४]प्रेजते। [५]उपोषति॥

**अचोऽन्त्यादि टि १। १। ६४॥**

[६]अचां मध्ये योऽन्त्य[illegible]आदिर्यस्य तट्टिसंज्ञं स्यात् ([७]शकन्ध्वादिषु पररूपं वाच्यम्)। तच्च[illegible]। [१]शकन्धुः। कर्कन्धुः। मनीषा। [८]आकृतिगणोऽयम्। [९]मार्त्तण्डः॥

---

वसनार्णम्, ऋणार्णम्, दशार्णो देशः, इत्यादीन्युदाहरणानि बोध्यानि॥

१–'प्रादयः' इति सूत्रमनुवर्त्याह—प्रादय इति॥ २–भूश्च वाश्च भूवौ, आदिश्च आदिश्च आदी, भूवावादी येषां ते भूवादय इति विग्रहः। तथा च भूप्रभृतयो वासदृशा इत्यन्वयः; भूसाहचर्याद् वाशब्दोऽनव्ययं गृह्यते, वासाहचर्याद् भूशब्दोऽसत्त्ववाची गृह्यते। तथाभूतौ भूवाशब्दौ क्रियावाचकावेवेति फलितार्थमाह—क्रियावाचिन इति॥ ३–प्रकर्षेण गच्छति॥ ४–अतिशयेन प्रकाशते॥ ५–उपगच्छति॥ ६–यथा मनस् इत्यत्र अच्समुदायो मकारोत्तराकारो नकारोत्तराकारश्चेत्यकारद्वयम्, तयोर्मध्ये अन्त्योऽच् नकारोत्तराकारः, स आदिर्यस्य समुदायस्य तादृशसमुदायः 'अस्' इति, तस्य टिसंज्ञा। शकादिशब्दे तादृशसमुदायः केवलाकाररूप एव व्यपदेशिवद्भावेन॥ ७–शकन्ध्वादिष्विति विषयसप्तमी, एवञ्च शकन्ध्वादिगणविषये पूर्वपदस्य टेरुत्तरपदावयवेऽचि परे पूर्वपरयोः पररूपमित्यर्थः। 'शकन्धुः' इति पदस्य—शकस्य देशविशेषस्य अन्धुः कूप इत्यर्थः। 'कर्कन्धुः' बदरीफलम्, 'मनीषा' बुद्धिः॥ ८–आकृत्या स्वरूपेण गण्यते इत्याकृतिगणः, अयं भावः—एत एव शब्दा अत्र गणे एवंरूपेण निर्दिष्टा इत्येवं नियमो नास्ति; किन्तु, यत्र शब्दे पररूपं दृश्यते तद्विधायकं च शास्त्रं नास्ति स शब्दः शकन्ध्वादिः, एवं रीत्यान्यत्राप्याकृतिगण इत्यस्यार्थो ज्ञेयो यथा—चादिषु स्वरादिषु॥ ९–मार्त्तण्डः सूर्य्यः, मृताण्डादागत इति विग्रहे 'तत आगतः' इत्यण्विषये एव पररूपम्॥

**ओमाङोश्च ६। १। ९५॥**

ओमि आङि चात्परे पररूपमेकादेशः स्यात्। शिवायों नमः। शिव एहि॥

**अन्तादिवच्च ६। १। ८५॥**

योऽयमे[1]कादेशः स पूर्वस्यान्तवत्परस्यादिवत्। शिवेहि[2]॥

**अकः सवर्णे दीर्घः ६। १। १०१॥**

अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात्। दैत्यारिः[3]। श्रीशः[4]। विष्णूदयः। होतृकारः॥

**एङः पदान्तादति ६। १। १०९॥**

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव[5]। विष्णोऽव॥

**सर्वत्र विभाषा गोः ६। १। १२२॥**

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते। गोअग्रम्, गोऽग्रम्। एङन्तस्य किम्? चित्रग्वग्रम्[6]। पदान्ते किम्? गोः॥

**अनेकाल्[7] शित्सर्वस्य १। १। ५५॥**

इति प्राप्ते[8]॥

**ङिच्च १। १। ५३॥**

ङिदनेकालप्यन्त्यस्यैव स्यात्॥

**अवङ् स्फोटायनस्य ६। १। १२३॥**

---

१–एकादेशे स्थानिद्वयम्, पूर्वः परश्च; तथा चाविकृतरूपे पूर्वस्थानिनि सति तत्सहिते समुदाये यो धर्मः स एकादेशविशिष्टे पूर्वान्तवद्भावेनायाति, एवमविकृते परस्थानिनि सति तत्सहिते समुदाये यो धर्मः स एकादेशविशिष्टे परादिवद्भावेनायाति; इत्येतत्फलितकथनम्॥ २–'शिव+ आ + इहि' इत्यवस्थायाम् 'शिव + आ' इत्यत्र 'अकः सवर्णे दीर्घः' इति दीर्घे प्राप्ते 'आ + इहि' इत्यत्र 'आद्गुणः' इति गुणे च प्राप्ते धातूपसर्गकार्यत्वेन गुणस्यान्तरङ्गत्वाद् दीर्घस्य बहिरङ्गत्वात् पूर्वं गुणे जाते 'शिव + एहि' इत्यवस्थायाम् 'अन्तादिवच्च' इत्यनेन पूर्वान्तवद्भावेनाङ्त्वे 'ओमाङोश्च' इति पररूपे सिद्धमिदम्। अस्य 'हे शिव आगच्छ' इत्यर्थः॥ ३–दैत्यशत्रुः॥ ४–लक्ष्मीपतिः॥ ५–'अव' इत्यस्य 'रक्ष' इत्यर्थः॥ ६–'एकदेशविकृतमनन्यवत्' इति न्यायेन गोशब्दत्वेऽप्येङन्तत्वाभावान्न प्रकृतिभावः। यस्य चित्रा गावस्तस्याग्रमिति शब्दार्थः॥ ७–अनेकाल् शिच्चादेशो सर्वस्य स्थाने भवतः॥ ८–अस्य 'सर्वादेशे' इत्यादिः॥

पदान्ते एङन्तस्य गोरवङ् वाऽचि। गवाग्रम्, गोऽग्रम्। पदान्ते किम्? गवि॥

**इन्द्रे च ६। १। १२४॥**

गोरवङ् स्यादिन्द्रे। गवेन्द्रः[१]॥

**दूराद्धूते च ८। २। ८४॥**

दूरात्[२]सम्बोधने वाक्यस्य टेः प्लुतो वा॥

**प्लुतप्रगृह्या अचि नित्यम् ६। १। १२५॥**

एतेऽचि प्रकृत्या स्युः। आगच्छ कृष्ण ३ अत्र गौश्चरति॥

**ईदूदेद्द्विवचनं प्रगृह्यम् १। १। ११॥**

ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू॥

**अदसो मात् १। १। १२॥**

अस्मात्[३]परावीदूतौ[६] प्रगृह्यौ स्तः। अमी[४] ईशाः। रामकृष्णावमू आसाते[५]। मात्किम्? अमुकेऽत्र॥

**चादयोऽसत्त्वे १। ४। ५७॥**

अद्रव्यार्थाः[७]श्चादयो निपाताः स्युः॥

**प्रादयः १। ४। ५८॥**

एतेऽपि तथा[८]॥

**निपात एकाजनाङ् १। १। १४॥**

एकोऽज् निपात आङ्वर्जः प्रगृह्यः स्यात्। ई[९] इन्द्रः। उ[१०] उमेशः।

---

१–गवां पतिर्वृषभः॥ २–सम्यग्बोधनं सम्यग् ज्ञापनं न त्वभिमुखीकरणमात्रम्॥ ३–अदस्सम्बन्धिनो मकारादित्यर्थः॥ ४–'द्विवचनमिति तु नानुवर्तते' इति बोधयितुं बहुवचनमुदाहरति—'अमी ईशाः' इति। अस्य 'एते ईश्वराः' इत्यर्थः॥ ५–उपविशत इत्यर्थः॥ ६–असति मात्ग्रहणे एकारोऽप्यनुवर्तेत, मादग्रहणे कृते मकारादव्यवहितपरस्यैकारस्याभावान्नानुवृत्तिरिति॥ ७–सत्त्वं द्रव्यम्, तच्च लिङ्गसंख्यान्वितम्॥ ८–निपातसंज्ञकाः स्युरित्यर्थः॥ ९–इ विस्मये॥ १०–उ वितर्के, मृताण्डात् महादेवः॥

'वाक्यस्मरणयोरङित्'[1]; आ[2] एवं नु मन्यसे। आ[3] एवं किल तत्। अन्यत्र ङित्; आ ईषदुष्णम् ओष्णम्[4]॥

**ओत् १। १। १५॥**

ओदन्तो निपातः प्रगृह्यः स्यात्। अहो ईशाः॥

**सम्बुद्धौ शाकल्यस्येतावनार्षे १। १। १६॥**

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे। विष्णो इति, विष्ण[5] इति, विष्णविति॥

**मय उञो वो वा ८। ३। ३३॥**

मयः परस्य उञो वो वाऽचि। किम्वुक्तम्[6], किमु उक्तम्॥

**इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६। १। १२७॥**

पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि। ह्रस्वविधिसामर्थ्यान्न[7] स्वरसन्धिः। चक्रि अत्र, चक्र्यत्र[8]। पदान्ता इति किम्? गौर्यौ—

**अचो रहाभ्यां द्वे ८। ४। ४६॥**

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। गौर्य्यौ। (न समासे)। वाप्यश्वः॥

---

१-अयं भाष्यश्लोकस्य चरमः पादः; पूर्णः श्लोकस्त्वित्थम्—

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्॥ इति॥

२-इदं वाक्यस्योदाहरणम् अवश्यमेव त्वम् एवम्—उक्तप्रकारेण मन्यसे, इति तदर्थः॥ ३-किञ्चन वस्तु दृष्ट्वा तत्सदृशं प्राग्दृष्टं वस्तु स्मरति—आ एवं किल तत्—निश्चयेनैतादृशमेव तदासीदित्यर्थः॥ ४-किञ्चित्तापयुक्तम्॥ ५-शाकल्यमते प्रगृह्यसंज्ञायां सत्यामपि मतान्तरे तदभावेऽवादेशे तत्राप्येतन्मते वलोपः॥ ६-अत्र 'पूर्वत्रासिद्धम्' इत्यनेन वत्वशास्त्रस्यासिद्धत्वात् 'मोऽनुस्वारः' इति नानुस्वारः। वत्वाभावपक्षे 'निपात एकाजनाङ्' इति प्रगृह्यत्वे प्रकृतिभावः॥ ७-यदि कृतेऽपि ह्रस्वे यणादिकं स्यात्तर्हि ह्रस्वविधानमेवानर्थकं स्याद्दीर्घस्यापि यणि रूपवैचित्र्याभावादिति भावः॥ ८-अत्र चक्री चक्रपाणिर्विष्णुर्वर्तत इति शेषः॥

ऋत्यकः ६। १। १२८॥

ऋति परे पदान्ता अकः प्राग्वद्वा।[1] ब्रह्म ऋषिः, ब्रह्मर्षिः।[2] पदान्ताः किम्? आर्च्छत्[3]॥

इत्यच्सन्धिः।

☆☆☆☆

१-'एङः पदान्तात्—' इत्यतः 'पदान्तात्' इति, 'इकोऽसवर्णे—' इत्यतः 'शाकल्यस्य ह्रस्वः' इति च वर्तते तदाह—प्राग्वदिति; पूर्ववदनेनापि ह्रस्व इत्यर्थः॥ २-अत्रापि ह्रस्वविधानसामर्थ्यात् 'आद्गुणः' इति गुणो न॥ ३-'आडजादीनाम्' इति जातस्याडागमस्य धात्ववयवत्वेन पदान्तत्वाभाव इति भावः, अत्र 'आटश्च' इति वृद्धिः। आगच्छदिति तदर्थः॥

'स[1] इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत। सेमोमविड्ढि[2] प्रभृतिम्। सैष दाशरथी रामः॥

इति विसर्गसन्धिः॥

इति पञ्चसन्धिप्रकरणम्।[3]



१-'सस्' इति प्रथमान्तानुकरणलुप्तषष्ठ्यन्तम्। 'सुलोपः' इति वर्तते अत आह—स इत्यस्येति॥ २-'स सु+इमामविड्ढि, स सु+एष दाशरथी रामः' इत्युभयत्रापि यदि सोर्लोपो न स्यात्तदा सस्य रुत्वे यत्वे यकारस्य लोपे तस्यासिद्धत्वाद् गुणाद्यभावे एकाक्षराधिक्येन पादपूर्तिर्न स्यात्। 'दाशरथी रामः' इत्यत्र तु 'दाशरथिस् रामः' इत्यवस्थायां सकारस्य रुत्वे, रो रि लोपे दीर्घः॥ ३-पञ्चसन्धिशब्दो विचार्यते—तत्र पञ्चजातीयानां वर्णानां स्थाने सन्धिर्वर्णसन्धानम्। तत्राज्झल्विसर्गसन्धयः प्रसिद्धाः। चतुर्थः स्वादिसन्धिः। यद्यपि स हल्सन्धिरेव शिवोऽर्च्य इत्यादौ विभक्तिसकारादेर्हल्रूपत्वात्, तथापि तत्र प्रायो विभक्तिस्थानिककार्यस्यैव 'स्वौजसमौट्—' इति सु प्रत्यय इत्येवं प्रवृत्त्यभिधानेन गोबलीवर्दन्यायेन हल्सन्धितः पृथक्कथनम्। पञ्चमः कः? इति प्रश्ने केचित् प्रकृतिभावस्य तत्त्वमाचक्षते, तन्न; सन्धेर्मेलनरूपस्य तत्राभावात्। वयं तु ब्रूमः—पञ्चमोऽनुस्वारसन्धिः परसवर्णरूपः; हल्सन्धौ तद्विधायकंसूत्रोल्लेखस्तु मकारनकाररूपहल्वर्णयोस्तत्र प्रकरणेऽनुस्वारे सम्पन्ने एवानुस्वारस्य वर्णान्तरसन्धानात्॥

७१

# अथ षड्लिङ्गेषु अजन्तपुँल्लिङ्गाः

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १। २। ४५॥**[1]

धातुं प्रत्ययं[2] प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्॥

**कृत्तद्धितसमासाश्च १। २। ४६॥**

कृत्तद्धितान्तौ समासाश्च तथा[3] स्युः॥

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४। १। २॥**[4]

सु औ जस् इति प्रथमा। अम् औट् शस् इति द्वितीया। टा भ्याम् भिस् इति तृतीया। ङे भ्याम् भ्यस् इति चतुर्थी। ङसि भ्याम् भ्यस् इति पञ्चमी। ङस् ओस् आम् इति षष्ठी। ङि ओस् सुप् इति सप्तमी॥

**ङ्याप्प्रातिपदिकात् ४। १। १॥**

**प्रत्ययः ३। १। १॥**

**परश्च ३। १। २॥**

इत्यधिकृत्य। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः॥

**सुपः १। ४। १०३॥**

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि[5] स्युः॥

---

१—'सुप्तिङन्तम्—' इति सूत्रे प्रथमं निर्दिष्टं सुबन्तं साधयितुं प्रकरणषट्कमारभमाणस्तत्रादौ सुब्विधौ प्रातिपदिकस्य प्रधानतयोद्देशेन तत्संज्ञाविधायकसूत्रमाह—अर्थवदित्यादि। 'धनं वनम्' इत्यादौ प्रतिवर्णं संज्ञावारणाय—अर्थवदिति। 'अहन्' इत्यादौ नलोपाद्यापत्तिवारणाय—अधातुरिति॥ २–अप्रत्यय इत्यत्र प्रत्ययपदमावर्त्यते, तत्रैकः प्रत्ययपरोऽपरश्च प्रत्ययान्तपरः प्रत्ययग्रहणपरिभाषया प्रत्ययशब्दात्तदन्तविधिरत आह—प्रत्ययं प्रत्ययान्तं चेत्यादि। प्रत्ययपर्युदासात् 'हरिषु' इत्यत्र सोर्न प्रातिपदिकत्वम्। प्रत्ययान्तपर्युदासेन समुदायस्य न संज्ञा॥ ३–प्रातिपदिकसंज्ञकाः स्युरित्यर्थः॥ ४–अत्रायं लेखक्रमो ज्यायान्—पूर्वम् 'प्रत्ययः', 'परश्च', 'ङ्याप्प्रातिपदिकात्' इत्यधिकारसूत्रत्रयं ततः 'स्वौजसमौट्—' इति सूत्रं ततः 'ङ्यन्तादाबन्तात्' इति वृत्तिस्ततः 'सु औ जस् इति प्रथमा' इत्यादीति बोध्यम्॥ ५–यथा 'सु' इत्येकवचनम्, 'औ' इति द्विवचनम्, 'जस्' इति बहुवचनम्; एवमन्यत्रापि॥

**द्व्येकयोर्द्विवचनैकवचने १। ४। २२॥**

द्वित्वैकत्वयोरेते[1] स्तः॥

**विरामोऽवसानम् १। ४। ११०॥**

वर्णानामभावोऽवसानसंज्ञः[2] स्यात्। रुत्वविसर्गौ। रामः॥

**सरूपाणामेकशेष एकविभक्तौ १। २। ६४॥**

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते॥

**प्रथमयोः पूर्वसवर्णः ६। १। १०२॥**

अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते॥

**नादिचि ६। १। १०४॥**

आदिचि न पूर्वसवर्णदीर्घः। वृद्धिरेचि। रामौ॥

**बहुषु बहुवचनम् १। ४। २१॥**

बहुत्वविवक्षायां बहुवचनं स्यात्॥

**चुटू १। ३। ७॥**

प्रत्ययाद्यौ चुटू इतौ स्तः॥

**विभक्तिश्च १। ४। १०४॥**

सुप्तिङौ विभक्तिसंज्ञौ स्तः॥

**न विभक्तौ तुस्माः १। ३। ४॥**

विभक्तिस्थास्तवर्गसमा[3] नेतः। इति सस्य नेत्त्वम्। रामाः[4]॥

---

१–घटादिपदार्थद्वयविवक्षायां द्विवचनम्, एवं तदर्थैकत्वविवक्षायामेकवचनम्॥ २–यदुच्चारणानन्तरमव्यवहितोत्तरकाले वर्णान्तरं नोच्चार्यते तत्र पूर्वोच्चारितान्तवर्णोऽवसानसंज्ञक इति भावः॥ ३–सकारमकारा इत्यर्थः। सर्वस्मात्, रामाः, रामान्, रामम् इत्युदाहरणानि॥ ४–रामशब्दस्य अव्युत्पत्तिपक्षे 'अर्थवत्—' इति व्युत्पत्तिपक्षे च 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा, बहुत्वविवक्षायां 'रामश्च रामश्च रामश्च' इति विग्रहे रामरामरामेति शब्दत्रयमध्ये 'सरूपाणाम्—' इत्यनेनैकस्य शेषे 'बहुषु बहुवचनम्' इत्येतत्सहकृतेन 'स्वौजसमौट्—' इति सूत्रेण जसि 'चुटू' इत्यनेन जस्येत्त्वे 'तस्य लोपः' इति लोपे च कृते सकारस्य 'हलन्त्यम्' इति प्राप्तेत्संज्ञायाः 'विभक्तिश्च' इति विभक्तिसंज्ञापुरस्सरं 'न विभक्तौ—' इत्यनेन निषेधे 'प्रथमयोः—' इति पूर्वसवर्णदीर्घे सस्य रुत्वविसर्गयोः 'रामाः' इति सुसम्पन्नम्॥

**एकवचनं सम्बुद्धिः २। ३। ४९॥**

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्॥

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १। ४। १३॥**

यः प्रत्ययो यस्मात् क्रियते तदादिशब्दस्वरूपं तस्मिन्नङ्गं स्यात्॥

**एङ्ह्रस्वात्सम्बुद्धेः ६। १। ६९॥**

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्। हे राम। हे रामौ। हे रामाः॥

**अमि पूर्वः ६। १। १०७॥**

अको[2]ऽम्यचि पूर्वरूपमेकादेशः। रामम्। रामौ॥

**लशक्वतद्धिते १। ३। ८॥**

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः॥

**तस्माच्छसो नः पुंसि ६। १। १०३॥**

पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि॥

**अट्कुप्वाङ्नुम्व्यवायेऽपि ८। ४। २॥**

अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यव[3]धानेऽपि रषाभ्यां परस्य नस्य णः समानपदे। इति प्राप्ते॥

---

१-सम्बोधनं कारकविशेषस्तत्प्रयोगे प्रायः पूर्वं 'हे' शब्दप्रयोगः, एवं 'अयि, है' इत्यनयोरपि प्रयोगः, कुत्सया क्रोधेन वा वाक्योच्चारणे रेशब्दधिक्शब्दयोरपि सम्बोधने प्रयोगो यथा—'रे मूर्ख, धिङ्मूर्ख' इति; क्वचित्त्वरायाम् 'रे' 'हे' शब्दयोः सम्बोधने द्विर्वचनम्, यथा—

'रे रे रावण दीयतां जनकजा'
'हे हे यशोदे तव बालकोऽसौ'

इत्यादौ। क्वचिदन्तेऽपि 'है' 'हे' शब्दयोः प्रयोगः, क्वचिद् 'हे' शब्दादिकं विनापि सम्बोधनप्रयोगः, यदुक्तम्—

हैहेशब्दौ विनापि स्यात्क्वचिदन्ते तयोः स्थितिः।
यथा राम प्रसीद त्वं राम हे त्वां भजाम्यहम्॥ इति॥

२-'इको यणचि' इत्यतोऽचीति 'एकः पूर्वपरयोः' इति च वर्ततेऽत आह—अचीति। तथा चामोऽवयवेऽचि परे इति फलितार्थः॥ ३-अट् कवर्गः पवर्ग आङ्नुमित्येतेषां मध्ये प्रत्येकं व्यवधाने यथासम्भवमिलितद्वयादिव्यवधानेऽपि रषाभ्यां परस्य नस्य णत्वमित्यर्थः॥

**पदान्तस्य ८। ४। ३७॥**

नस्य णो न। रामान्॥

**टाङसिङसामिनात्स्याः ७। १। १२॥**

अदन्तात्टादीनामिनादयः स्युः। णत्वम्। रामेण॥

**सुपि च ७। ३। १०२॥**

यञादौ सुपि अतोऽङ्गस्य दीर्घः। रामाभ्याम्॥

**अतो भिस ऐस् ७। १। ९॥**

अनेकाल्शित्सर्वस्य। रामैः॥

**ङेर्यः ७। १। १३॥**

अतोऽङ्गात्परस्य ङेर्यादेशः[1]॥

**स्थानिवदादेशोऽनल्विधौ १। १। ५६॥**

आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ[2]। इति स्थानिवत्त्वात् सुपि चेति दीर्घः। रामाय। रामाभ्याम्॥

**बहुवचने झल्येत् ७। ३। १०३॥**

झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः। रामेभ्यः। सुपि किम्? पचध्वम्॥

**वाऽवसाने ८। ४। ५६॥**

अवसाने झलां चरो वा। रामात्, रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य॥

**ओसि च ७। ३। १०४॥**

अतोऽङ्गस्यैकारः[3]। रामयोः॥

**ह्रस्वनद्यापो नुट् ७। १। ५४॥**

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः॥

**नामि ६। ४। ३॥**

अजन्ताङ्गस्य दीर्घः। रामाणाम्। रामे। रामयोः। सुपि—एत्वे कृते॥

---

१-चतुर्थ्येकवचनस्य 'ङे' इत्येतस्येत्यर्थः॥ २-स्थानिसम्बन्धी योऽल् तन्निमित्तके विधौ (कार्ये) स्थानिवद्भावो नेत्यर्थः॥ ३-ओसि पर इति शेषः॥

**आदेशप्रत्यययोः ८। ३। ५९॥**

इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवश्च यः सस्तस्य मूर्धन्यादेशः। ईषद्विवृतस्य सस्य तादृश एव षः। रामेषु। एवं कृष्णादयो[1]ऽप्यदन्ताः॥

**सर्वा[2]दीनि सर्वनामानि १। १। २७॥**

सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत्[3] त्व नेम सम सिम[4]। पूर्वपराव[5]रदक्षिणोत्तरापरा[6]धराणि व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगोप[7]संव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम्॥

**जसः शी ७। १। १७॥**

अदन्तात्सर्वनाम्नो जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। सर्वे॥

**सर्वनाम्नः स्मै ७। १। १४॥**

अतः सर्वनाम्नो ङेः स्मै। सर्वस्मै॥

**ङसिङ्योः स्मात्स्मिनौ ७। १। १५॥**

अतः सर्वनाम्न एतयोरेतौ स्तः। सर्वस्मात्॥

**आमि सर्वनाम्नः सुट् ७। १। ५२॥**

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः॥ उभशब्दो नित्यं द्विवचनान्तः। उभौ २। उभाभ्याम् ३। उभयोः २। त[8]स्येह पाठोऽकजर्थः। उभयशब्दस्य द्विवचनं ना[9]स्ति। उभयः। उभये। उभयम्।

---

१-आदिशब्दाद् देवघटपटकुम्भस्तम्भनागरागपाकप्रभृतयः शब्दा ग्राह्याः॥ २-सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युरित्यर्थः॥ ३-त्वत्त्वशब्दावन्यार्थवाचिनौ॥ ४-सिमशब्दः सर्वपर्यायः॥ ५-अवरशब्दो लघ्वर्थवाचकः॥ ६-अधरशब्दो नीचार्थकः॥ ७-उपसंव्यानशब्दः परिधानीयार्थकः॥ ८-ननु सर्वनामसंज्ञानिमित्तकं कार्यमेकवचनबहुवचनविभक्त्योर्दृष्टम्, उभशब्दश्च द्विवचनान्त इति तस्य पाठो व्यर्थ इत्यत आह—तस्येहेति। 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति सूत्रेणेति शेषः॥ ९-'उभयो मणिः, उभये देवमनुष्याः' इति भाष्यकृता द्विवचनस्यादर्शितत्वात्। तेनैकवचनबहुवचनयोरेव तत्प्रयोगः, द्विवचने तु तयप्रत्ययान्तस्य, तथा च—उभयः, उभतयौ, उभये। उभयम्, उभतयौ, उभयान् इत्यादि॥

उभयान्। उभयेन। उभयैः। उभयस्मै। उभयेभ्यः। उभयस्मात्॥ उभयेभ्यः। उभयस्य। उभयेषाम्। उभयस्मिन्। उभयेषु॥ डतरडतमौ प्रत्ययौ, प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता[1] ग्राह्याः॥ नेम इत्यर्धे॥ समः[2] सर्वपर्यायस्तुल्यपर्यायस्तु न, यथासंख्यमनुदेशः समानामिति ज्ञापकात्॥

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १। १। ३४॥**

एतेषां व्यवस्थायामसंज्ञायां च सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे, पूर्वाः। असंज्ञायां किम्? उत्तराः कुरवः। स्वाभिधेयापेक्षावधिनियमो[3] व्यवस्था। व्यवस्थायां किम्? दक्षिणा गाथकाः, कुशला इत्यर्थः॥

**स्वमज्ञातिधनाख्यायाम्[4] १। १। ३५॥**

ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा। स्वे, स्वाः; आत्मीयाः, आत्मान इति वा। ज्ञातिधनवाचिनस्तु, स्वाः; ज्ञातयोऽर्था वा॥

**अन्तरं बहिर्योगोपसंव्यानयोः १। १। ३६॥**

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा। अन्तरे, अन्तरा वा गृहाः; बाह्या इत्यर्थः। अन्तरे, अन्तरा वा शाटकाः; परिधानीया इत्यर्थः॥

**पूर्वादिभ्यो नवभ्यो[5] वा ७। १। १६॥**

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। एवं परादीनाम्। शेषं सर्ववत्॥

**प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च १। १। ३३॥**

---

१-कतर-कतम-यतर-यतम-ततर-ततम-एकतर-एकतमशब्दाः॥ २-समशब्दः सर्वार्थवाची तुल्यार्थवाची च, तत्राद्यस्यैव सर्वादिगणे पाठो न द्वितीयस्य, अत एव समानामिति सूत्रकृतोक्तम्। तुल्यपर्यायस्य ग्रहणे समेषामित्युक्तं भवेत्॥ ३-स्वस्य पूर्वादिशब्दस्याभिधेयो दिग्देशकालरूपोऽर्थस्तेनापेक्ष्यमाणो जिज्ञास्यमानो योऽवधेर्नियमः 'काशी पूर्वा, कुतः पूर्वा? प्रयागात्' इत्येवंरूपः स व्यवस्थेति॥ ४-स्वशब्दस्य चत्वारोऽर्था आत्मात्मीयज्ञातिधनरूपाः, तत्राद्यद्वयार्थे सर्वनामसंज्ञा, नान्त्यद्वयार्थे। उदाहरणं मूले स्पष्टम्॥ ५-'पूर्वपरावर—' इति सूत्रपठितसप्तशब्दाः 'स्वमज्ञाति—' इत्यत्र पठितस्वशब्दः 'अन्तरं बहिः—' इति सूत्रपठितान्तरशब्दश्चेत्येते नव पूर्वादयः। प्राप्तविभाषेयम्; तेन संज्ञोपसर्जनयोर्न प्रवर्तते॥

एते जसि उक्तसंज्ञा वा स्युः। प्रथमे, प्रथमाः॥ तयः [1]प्रत्ययः॥ द्वितये, द्वितयाः। शेषं [2]रामवत्॥ नेमे, नेमाः। शेषं सर्ववत्॥ [3](तीयस्य ङित्सु वा) द्वितीयस्मै, द्वितीयायेत्यादि। एवं तृतीयः॥ निर्जरः॥

**[4]जराया जरसन्यतरस्याम् ७। २। १०१॥**

अजादौ विभक्तौ। (प.) [5]पदाङ्गाधिकारे तस्य च तदन्तस्य च। (प.) [6]निर्दिश्यमानस्यादेशा भवन्ति। (प.) [7]एकदेशविकृतमनन्यवत्, इति जरशब्दस्य जरस्। निर्जरसौ। निर्जरस इत्यादि। पक्षे हलादौ च रामवत्॥ विश्वपाः॥

**दीर्घाज्जसि च ६। १। १०५॥**

दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात्। विश्वपौ। विश्वपाः। हे विश्वपाः। विश्वपाम्। विश्वपौ॥

**सुडनपुंसकस्य १। १। ४३॥**

स्वादिर्[8]पञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य॥

**स्वादिष्वसर्वनामस्थाने १। ४। १७॥**

कप्[9]प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात्॥

---

१-तेन तयप्प्रत्ययान्ता द्वितयत्रितयचतुष्टयपञ्चतयप्रभृतयः शब्दा ग्राह्याः॥ २-एवमल्पार्धकतिपयशब्दानां जसोऽन्यत्र रामवद्रूपम्। इयमुभयत्रविभाषा; प्रथमादिशब्देऽप्राप्ता सर्वनामसंज्ञा नेमशब्दे च प्राप्ता॥ ३-तीयप्रत्ययान्तस्य ङिति सुपि परे सर्वनामसंज्ञा वा भवति॥ ४-जराशब्दस्य जरस् वा स्यादजादौ विभक्तावित्यर्थः। इयमेवाप्राप्तविभाषा॥ ५-ननु सूत्रेण जराशब्दस्यैव जरसादेशः प्राप्यते, निर्जरशब्दस्तु न तथा, तत्कथं तत्रास्य सूत्रस्य प्रवृत्तिः? इति चेत्तत्राह—पदेति; पदाधिकारेऽङ्गाधिकारे च तस्य सूत्रोच्चारितस्य 'जरा' इत्यादेः, तदन्तस्य सूत्रोच्चारितशब्दान्तस्य 'परमजरा' इत्यादिकस्य च ग्रहणं भवति॥ ६-ननु 'पदाङ्गाधिकारे—' इति परिभाषया तदन्तग्रहणे निर्जरेति समुदायस्य जरसादेशः स्यादित्याशङ्कायामाह—निर्दिश्यमानस्येति; सूत्रे उच्चार्यमाणस्यैवादेशा भवन्तीत्यर्थः॥ ७-नन्वेवं सूत्रे जराशब्द उच्चरितो न तु जरशब्दस्तत्कथमत्र जरसादेशः? इति चेत्तत्राह—एकदेशेति; एकदेशेन विकृतं रूपान्तरमापन्नमन्यसदृशं न भवतीत्यर्थः, छिन्नपुच्छेऽपि शुनि श्वत्वव्यवहारवत्॥ ८-'सुट्' इत्ययं सुमारभ्य औटष्टकारपर्यन्तं प्रत्याहारः, सर्वनामस्थाने चासम्बुद्धावित्यत्र 'असम्बुद्धौ' इति विशेषणसामर्थ्यात्। 'शि सर्वनामस्थानम्' इत्यतः 'सर्वनामस्थानम्' इति वर्ततेऽत आह—स्वादीति॥ ९-भपदसंज्ञयोरयं विवेकः—'स्वौजसमौट्—' इत्येतत्सूत्रपठितशस्प्रत्ययमारभ्य चतुर्थपञ्चमाध्याययोः पठितेषु

**यचि भम् १। ४। १८॥**

यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात्॥

**आकडारादेका संज्ञा १। ४। १॥**

इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया। या[1] पराऽनवकाशा च॥

**आतो धातोः ६। ४। १४०॥**

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः। अलोऽन्त्यस्य। विश्वपः[2]। विश्वपा। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः॥ धातोः किम्? हाहान्[3]॥ हरिः। हरी॥

**जसि च ७। ३। १०९॥**

ह्रस्वान्तस्याङ्गस्य गुणः। हरयः॥

---

कप्प्रत्ययान्तेषु प्रत्ययेषु ये यकारादयोऽजादयश्च तेषु परतः प्रकृतेर्भसंज्ञा। तद्भिन्नेषु प्रत्ययेषु परतः प्रकृतेः पदसंज्ञा। क्वचिदजादावपि 'सिति च' इत्यनेन पदसंज्ञा, इति त्वन्यत्। नपुंसके प्रथमाद्वितीयाद्विवचने प्रकृतेर्भसंज्ञा तत्र सर्वनामसंज्ञाया अभावात्। अत एव सुपथी इत्यत्र टिलोपो भवति, सुपुंसी इत्यत्रासुङ्ङादेशश्च न भवति॥

१–ननु 'आकडारादेका—' इति सूत्रमेकस्मिँल्लक्ष्ये संज्ञाद्वयाभावस्य बोधकम्, न त्वत्रैका भसंज्ञा भवति पदसंज्ञा वेत्यवधारयति इति कथं जानीयां विश्वपाशब्दे भसंज्ञैव न पदसंज्ञा? इत्याशङ्कमानम्प्रत्याह—येति; तत्र उभयोः संज्ञयोरन्यत्रान्यत्र लब्धावकाशत्वे विरोधिनि लक्ष्ये परसंज्ञैव भवति विप्रतिषेधशास्त्रात्। तयोर्मध्ये एकस्या निरवकाशत्वे तु या निरवकाशा सैव भवति। निरवकाशत्वं च उत्सर्गाप्राप्तिस्थले चारितार्थ्याभावरूपम्। उत्सर्गश्चासति प्रतिबन्धके वर्तमानः, उत्सृज्यते बाधकसद्भावे त्यज्यत इति तद्व्युत्पत्तेः। प्रकृतेः परा निरवकाशा च भसंज्ञैव॥ २–विश्वपाशब्दात् शसि, अनुबन्धलोपे 'स्वादिष्वसर्वनामस्थाने' इति प्राप्तां पदसंज्ञां बाधित्वा 'आकडारादेका संज्ञा' इति सूत्रसहकारेण परत्वानवकाशत्वाभ्यां 'यचि भम्' इति विश्वपाशब्दस्य भसंज्ञायाम् 'अलोऽन्त्यस्य' इति सूत्रसहकारेण 'आतो धातोः' इत्याकारलोपे विभक्तिसकारस्य रुत्वे विसर्गे च 'विश्वपः' इति सिद्धम्। विश्वपाशब्दस्य विश्वपालकोऽर्थः॥ ३–हाहाशब्दस्येदृशं रूपम्—हाहाः, हाहौ २, हाहाः, हाहाम्, हाहान्, हाहा, हाहाभ्याम् ३, हाहाभिः, हाहै, हाहाभ्यः २, हाहाः २, हाहौः २, हाहाम्, हाहे, हाहासु; इति। हाहा इति गन्धर्वविशेषस्य संज्ञा॥

**ह्रस्वस्य गुणः ७। ३। १०८॥**

सम्बुद्धौ[1]। हे हरे। हरिम्। हरी। हरीन्॥

**शेषो घ्यसखि १। ४। ७॥**

शेष इति स्पष्टार्थम्। ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम्॥

**आङो नाऽस्त्रियाम् ७। ३। १२०॥**

घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा। हरिणा। हरिभ्याम्। हरिभिः॥

**घेर्ङिति ७। ३। १११॥**

घिसंज्ञस्य ङिति सुपि गुणः। हरये। हरिभ्याम्। हरिभ्यः॥

**ङसिङसोश्च ६। १। ११०॥**

एङो ङसिङसोरति पूर्वरूपमेकादेशः। हरेः २। हर्योः २। हरीणाम्॥

**अच्च घेः ७। ३। ११९॥**

इदुद्भ्यामुत्तरस्य ङेरौत्, घेरच्च[2]। हरौ। हरिषु। एवं कव्यादयः[3]।

**अनङ् सौ ७। १। ९३॥**

सख्युरङ्गस्यानङादेशोऽसम्बुद्धौ सौ॥

**अलोऽन्त्यात्पूर्व उपधा १। १। ६५॥**

अन्त्यादलः पूर्वो वर्ण[4] उपधासंज्ञः॥

**सर्वनामस्थाने चासम्बुद्धौ ६। ४। ८॥**

नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने॥

**अपृक्त एकाल् प्रत्ययः १। २। ४१॥**

एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्॥

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६। १। ६८॥**

हलन्तात्परं[5] दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते॥

---

१-ह्रस्वान्तस्याङ्गस्य गुणः स्यादिति शेषः॥ २-घिसंज्ञकस्यान्त्यस्याकारादेश इत्यर्थः॥ ३-अग्निगिरिरविविधिपविप्रभृतय आदिशब्दार्थः॥ ४-चरमावयवाल्वर्ण-मात्रोऽवधिस्तत्पूर्वोऽन्त्यालसजातीय एव ग्राह्यः, स च वर्ण एव॥ ५-हलन्तात्परं

**नलोपः प्रातिपदिकान्तस्य ८। २। ७॥**

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः। सखा[1]॥

**सख्युरसंबुद्धौ ७। १। ९२॥**

सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्॥

**अचो ञ्णिति ७। २। ११५॥**

अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। सख्ये॥

**ख्यत्यात्परस्य ६। १। ११२॥**

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः। सख्युः॥

**औत् ७। ३। ११८॥**

इ[2]तः परस्य ङेरौत्। सख्यौ। शेषं हरिवत्॥

**प[3]तिः समास एव १। ४। ८॥**

घि[4]संज्ञः। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतये। कतिशब्दो नित्यं बहुवचनान्तः॥

**ब[5]हुगणवतुडति संख्या १। १। २३॥**

**डति च १। १। २५॥**

डत्यन्ता संख्या षट्संज्ञा स्यात्॥

---

'सुतिसि' इत्येतदपृक्तं हल्लुप्यते, दीर्घौ यौ ङ्यापौ तदन्ताच्च परं 'सुतिसि' इत्येतदपृक्तं हल्लुप्यत इति स्पष्टोऽर्थः॥

१-प्रातिपदिकात्सखिशब्दात्सौ, अङ्गसंज्ञायाम्, 'ङिच्च' इति सहकारेण 'अनङ् सौ' इति शास्त्रेण इकारस्यानङ्ङादेशेऽनुबन्धलोपे 'अलोऽन्त्यात्पूर्व उपधा' इत्यनेन नकारात्पूर्वाकारस्योपधा संज्ञायाम् 'सर्वनामस्थाने चासंबुद्धौ' इति दीर्घे 'अपृक्त एकाल् प्रत्ययः' इत्यपृक्तसंज्ञां विधाय 'हल्ङ्याब्भ्यो दीर्घात्—' इति सोः सकारस्य लोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे सखेति सिद्धम्। अस्य मित्रमर्थः॥ २-'इदुद्भ्याम्' इत्यत्रैकदेशे स्वरितत्वप्रतिज्ञयाऽऽह—इत इति; उकारानुवृत्तेरत्र फलाभावात्॥ ३-पतिशब्दः समास एव घिसंज्ञको न तु केवल इत्यर्थः॥ ४-'शेषो घ्यसखि' इत्यतः 'घि' इत्यनुवर्ततेऽत आह—घिसंज्ञ इति॥ ५-बहुगणशब्दौ वतुडतिप्रत्ययान्तौ चेत्येते संख्यासंज्ञकाः स्युरित्यर्थः॥

**षड्भ्यो लुक् ७। १। २२॥**

जेश्शसोः॥[1]

**प्रत्ययस्य लुक्श्लुलुपः १। १। ६१॥**

लुक्[2]श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात्॥

**प्रत्ययलोपे प्रत्ययलक्षणम् १। १। ६२॥**

प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात्। इति जसि चेति गुणे प्राप्ते॥

**न लुमताऽङ्गस्य १। १। ६३॥**

लुमता[3] शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात्। कति[4] २। कतिभिः। कतिभ्यः २॥ कतीनाम्। कतिषु। युष्मदस्मत् षट् संज्ञकास्त्रिषु सरूपाः[5]॥ त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २॥

**त्रेस्त्रयः[6] ७। १। ५३॥**

त्रिशब्दस्य त्रयादेशः स्यादामि। त्रयाणाम्। त्रिषु। गौणत्वे[7]ऽपि प्रियत्रयाणाम्॥

**त्यदादीनामः ७। २। १०२॥**

एषामकारो विभक्तौ। (द्विपर्य्यन्तानामेवेष्टिः)। द्वौ २। द्वाभ्याम् ३। द्वयोः २॥ पाति लोकमिति पपीः सूर्यः॥

**दीर्घाज्जसि च ६। १। १०५॥**

पप्यौ २। पप्यः। हे पपीः। पपीम्। पपीन्। पप्या। पपीभ्याम् ३। पपीभिः। पप्ये। पपीभ्यः २। पप्यः २। पप्योः। दीर्घत्वान्न नुट्, पप्याम्।

---

१-षट्संज्ञकेभ्यः परयोर्जश्शसोर्लुगित्यर्थः॥ २-लुक्शब्दमुच्चार्य यत्र प्रत्ययादर्शनं तत्र लुक्संज्ञेत्येवं क्रमेणार्थः॥ ३-'लुक् श्लु लुप्' एते लुमन्तः॥ ४-कतिशब्दाज्जसि 'बहुगणवतुडति संख्या' इत्यनेन कतिशब्दस्य संख्यासंज्ञां विधाय 'डति च' इत्यनेन षट्संज्ञां च कृत्वा 'प्रत्ययस्य लुक्श्लुलुपः' इति लुक्संज्ञायाम्, 'षड्भ्यो लुक्' इति जसो लुकि 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यनेन प्राप्तस्य जस्निमित्तकस्य गुणस्य 'न लुमताऽङ्गस्य' इति निषेधे सिद्धं रूपम्॥ ५-पुँल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गेषु समानरूपाः; यथा—कति पुरुषाः? कति स्त्रियः? कति फलानि? इत्यादि॥ ६-ननु त्रिशब्दो नित्यं बहुवचनान्त इत्युक्तम्, तत्कथं षष्ठ्येकवचने त्रेरिति रूपम्? इति चेदुच्यते; यत्रार्थपरस्त्रिशब्दस्तत्रैव बहुवचनान्तः, अत्र तु त्रिशब्दः त्रिशब्दस्वरूपस्य बोधकः॥ ७-स्वार्थमुत्सृज्य परार्थावलम्बनत्वं गौणत्वम्॥

ङौ तु सवर्णदीर्घः, पपी। पप्योः। पपीषु। एवं वातप्रम्यादयः[1]॥ बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी॥

**यू स्त्र्याख्यौ नदी १। ४। ३॥**

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः (प्रथमलिङ्गग्रहणं च)। [2]पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः॥

**अम्बार्थनद्योर्ह्रस्वः ७। ३। १०७॥**

[3]सम्बुद्धौ। हे बहुश्रेयसि॥

**आण्नद्याः ७। ३। ११२॥**

नद्यन्तात्परेषां ङितामाडागमः॥

**आटश्च ६। १। ९०॥**

आटोऽचि परे वृद्धिरेकादेशः। बहुश्रेयस्यै। बहुश्रेयस्याः। बहुश्रेयसीनाम्॥

**ङेराम्नद्याम्नीभ्यः ७। ३। ११६॥**

नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम्। बहुश्रेयस्याम्। शेषं पपीवत्॥ अङ्यन्तत्वान्न [4]सुलोपः। अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्॥ [5]प्रधीः॥

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६। ४। ७७॥**

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते॥

**एरनेकाचोऽसंयोगपूर्वस्य ६। ४। ८२॥**

धात्ववयवसंयोगपूर्वो[6] न भवति य इवर्णस्तदन्तो यो

---

१–वातप्रमीः शीघ्रगामी हरिण इत्यर्थः॥ २–पूर्वं समासादिवृत्तेः प्राक् स्त्र्याख्यस्य नित्यस्त्रीवाचकस्य सम्प्रति समासादिवृत्तावुपसर्जनत्वे सत्यपि नदीसंज्ञा भवतीत्यर्थः॥ ३–अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्सम्बुद्धावित्यर्थः॥ ४–तथा चोक्तम्—

अवीतन्त्रीतरीलक्ष्मीधीह्रीश्रीणामुणादितः।
अपि स्त्रीलिङ्गवृत्तीनां सोर्लोपो न कदाचन॥ इति॥

क्वचित् 'ससानामिति शब्दानाम्' इत्येवं तृतीयपादपाठः॥ ५–प्रकृष्टबुद्धियुक्त इत्यर्थः॥ ६–प्रधीशब्दे धीधातुस्तदवयवो धकारः स न संयोगसंज्ञकः, स पूर्वमीकारस्य, तदन्तस्तादृशेकारान्तो धीधातुः तदन्तस्यानेकाचोऽङ्गस्य—स धातुः अन्तो यस्य अङ्गस्य

धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यौ। प्रध्यः। प्रध्यि। शेषं पपीवत्। एवं ग्रामणीः[१]। ङौ तु ग्रामण्याम्[२]॥ अनेकाचः किम्? नीः। नियौ। नियः। अमि शसि च परत्वादियङ्[३] नियम्। ङेराम्; नियाम्॥ असंयोगपूर्वस्य किम्? सुश्रियौ। यवक्रियौ॥

**गतिश्च १। ४। ६०॥**

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः। ([४]गतिकारकेतरपूर्वपदस्य यण् नेष्यते)। शुद्धधियौ॥

**[५]न भूसुधियोः ६। ४। ८५॥**

एतयोरचि सुपि यण्न। सुधियौ। सुधिय इत्यादि॥ सुखमिच्छतीति सुखीः। सुतीः। सुख्यौ। सुत्यौ। सुख्युः। सुत्युः। शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः॥

**तृज्वत्क्रोष्टुः ७। १। ९५॥**

[६]असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः॥

**ऋतो ङिसर्वनामस्थानयोः ७। ३। ११०॥**

ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च। इति प्राप्ते—

**ऋदुशनस्पुरुदंसोऽनेहसां च। ७। १। ९४॥**

ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ॥

**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६। ४। ११॥**

अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। [७]क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टॄन्॥

---

तादृशम् अङ्गं प्रधीशब्दरूपं तच्चानेकाच्; इत्येवं समन्वयः॥

१–ग्रामनायकः। 'नीः' इत्यस्य तु 'नेता' इत्यर्थः॥ २–'ङेराम्नद्याम्—' इति ङेरामादेशः॥ ३–'अमि पूर्वः' इत्यतः 'प्रथमयोः पूर्वसवर्णः' इत्यतश्च परत्वादित्यर्थः॥ ४–गतिकारकाभ्यामितरद् भिन्नं पूर्वपदं यस्य तस्याङ्गस्येत्यर्थः॥ ५–'इको यणचि' इति यण् प्राप्तस्तं बाधित्वा 'अचि श्नु—' इति इयङुवङौ प्राप्तौ तौ बाधित्वा 'एरनेकाचो—' 'ओः सुपि' इति सूत्राभ्यां यण् प्राप्तस्तस्यायं निषेधः॥ ६–अङ्गसंज्ञकः क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते, इति वृत्तौ वाक्यशेषः॥ ७–क्रोष्टुशब्दात्सौ 'तृज्वत्क्रोष्टुः' इति सूत्रेण तृज्वद्भावेन

**विभाषा तृतीयादिष्वचि ७। १। ९७॥**

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे॥

**ऋत उत् ६। १। १११॥**

ऋतो ङसिङसोरति उदेकादेशः। रपरः॥

**रात्सस्य ८। २। २४॥**

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रस्य विसर्गः। क्रोष्टुः २। क्रोष्ट्रोः २। (नुमचिर[१]तृज्वद्भावे[२]भ्यो नुट् पूर्वविप्रतिषेधेन।) क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्॥ [३]हूहूः। हूह्वौ। हूह्वः। हूहूम् इत्यादि॥ अतिचमूशब्दे तु नदीकार्य्यं [४]विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्॥ [५]खलपूः॥

**ओः सुपि ६। ४। ८३॥**

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः। एवं [६]सुल्वादयः॥ [७]स्वभूः। स्वभुवौ। स्वभुवः॥ [८]वर्षाभूः॥

**[९]वर्षाभ्वश्च ६। ४। ८४॥**

अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि॥ [१०]दृन्भूः। (दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः।) दृन्भ्वौ। एवं [११]करभूः॥ धाता। हे धातः।

---

क्रोष्टुशब्दस्य क्रोष्टृभावे जाते 'ऋतो ङिसर्वनामस्थानयोः' इति प्राप्तं गुणं बाधित्वा 'ऋदुशनस्—' इति सूत्रेण ऋकारस्यानङ्ङादेशेऽनुबन्धलोपे 'असृन्तृच्—' इत्यादिनोपधादीर्घे नलोपे च क्रोष्टेति सिद्धम्। औजसादिषु तृज्वद्भावोत्तरम् 'ऋतो ङि —' इति गुणे कृते 'असृन्—' इति दीर्घो बोध्यः। क्रोष्टुशब्दस्य शृगालोऽर्थः॥

१–नुम्, 'अचि र ऋतः' , तृज्वद्भावश्च; एतान् बाधित्वा नुडागमो भवति पूर्वविप्रतिषेधेनेत्यर्थः॥ २–विप्रतिषेधसूत्रे 'अपरम्' इतिच्छेदात् 'पूर्वं कार्यं स्यात्' इत्यर्थस्वीकारेणेत्यर्थः। यथोत्तरं मुनीनां प्रामाण्याद् वार्तिककारेणाभिमतस्थलेष्वेवेष्यते पूर्वविप्रतिषेधः॥ ३–हूहूर्गन्धर्वविशेषस्य संज्ञा॥ ४–हूहूशब्दादित्यस्यादिः। अस्य सेनाविजयीत्यर्थः॥ ५–खलं भूमिं पुनातीति विग्रहः॥ ६–सुष्ठु लुनातीति सुलूः॥ ७–स्वेनैव भवतीति विग्रहः। ब्रह्मेत्यर्थः॥ ८–'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति कोषः॥ ९–'न भूसुधियोः' इत्यस्यापवादोऽयम्॥ १०–अस्य नृपो वज्रं सूर्यः सर्पश्चक्रं चार्थः॥ ११–कराद्भवतीति विग्रहः॥

धातारौ। धातारः। (ऋवर्णान्नस्य णत्वं वाच्यम्।) धातॄणाम्। एवं नप्त्रादयः॥ नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्[1]। तेनेह न। पिता। पितरौ। पितरः। पितरम्। शेषं धातृवत्। एवं जामात्रादयः॥ ना। नरौ॥

**नृ च ६। ४। ६॥**

अस्य नामि वा दीर्घः। नृणाम्। नॄणाम्॥

**गोतो णित् ७। १। ९०॥**

ओकाराद्[2]विहितं सर्वनामस्थानं णिद्वत्। गौः। गावौ। गावः॥

**औतोऽम्शसोः ६। १। ९३॥**

ओतोऽम्शसोरचि आकार एकादेशः। गाम्। गावौ। गाः। गवा। गवे। गोः। इत्यादि॥

**रायो हलि ७। २। ८५॥**

अस्याकारादेशो हलि विभक्तौ। राः[3]। रायौ। रायः। राभ्यामित्यादि॥ ग्लौः[4]। ग्लावौ। ग्लावः। ग्लौभ्यामित्यादि॥

इत्यजन्तपुंल्लिङ्गाः।

१–'उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां संज्ञाशब्दानामुपधादीर्घश्चेत्तर्हि नप्त्रादीनामेव' इति नियमार्थम्। एवं पित्रादिशब्देषु न दीर्घः, यदाहुः—

'पिता माता ननान्दा च सव्येष्टृभ्रातृयातरः।
जामाता दुहिता देवा तृन्तृज्भ्यां रहिता नव॥ ' इति॥

२–'ओतो णिदिति वाच्यम्' इति वार्तिकानुरोधेन फलितमर्थमाह—ओकारादिति

३–रा धनम्॥ ४–चन्द्रमाः॥

# अथाजन्तस्त्रीलिङ्गाः

रमा[१]।

**औङ आपः ७ । १ । १८॥**

आबन्तादङ्गात्परस्यौङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा। रमे। रमाः॥

**सम्बुद्धौ च ७। ३। १०६॥**

आप एकारः स्यात्सम्बुद्धौ। एङ्ह्रस्वादिति[२] सम्बुद्धिलोपः। हे रमे। हे रमे। हे रमाः। रमाम्। रमे। रमाः।

**आङि चापः ७ । ३ । १०५॥**

आङि ओसि चाप एकारः। रमया। रमाभ्याम्। रमाभिः॥

**याडापः ७। ३। ११३॥**

आपो[३] ङितो याट्। वृद्धिः[४]। रमायै। रमाभ्याम्। रमाभ्यः। रमायाः। रमयोः। रमाणाम्। रमायाम्। रमासु। एवं दुर्गाम्बिकादयः[५]॥

**सर्वनाम्नः स्याड्ढ्रस्वश्च ७। ३। ११४॥**

आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः। सर्वस्यै। सर्वस्याः। सर्वासाम्। सर्वस्याम्। शेषं रमावत्॥ एवं विश्वादय आबन्ताः॥

**विभाषा दिक्समासे बहुव्रीहौ १।१। २८॥**

सर्वनामता[६] वा। उत्तरपूर्वस्यै[७], उत्तरपूर्वायै। तीयस्येति वा सर्वनामसंज्ञा। द्वितीयस्यै, द्वितीयायै॥ एवं तृतीया॥ अम्बार्थेति ह्रस्वः। हे अम्ब[८]। हे अक्क । हे अल्ल॥ जरा[९]। जरसौ इत्यादि। पक्षे रमावत्॥ गोपाः[१०], विश्वपावत्॥ मतीः[११]। मत्या॥

---

१-रमते विष्णुना साकमिति विग्रहे पचाद्यजन्तः 'अजाद्यतष्टाप्' इति टाप्प्रत्ययः, अत्र प्रकरणे प्राय आकारान्तशब्देषु टाप्। रमा लक्ष्मीः॥ २-'हल्ङ्याप्—' इति लोपं बाधित्वा परत्वात् 'सम्बुद्धौ च ' इति सूत्रेणैत्वे ततः 'एङ्ह्रस्वात्—' इति सम्बुद्धेर्लोप इत्यर्थः॥ ३-आबन्तादङ्गात्परस्य ङिद्वचनस्य याट् स्यादित्यर्थः॥ ४-'वृद्धिरेचि' इत्यनेनेत्यर्थः, एवं स्याडागमस्थलेऽपि। न तु 'आटश्च' इत्यनेनेति भ्रमितव्यम् इह आटोऽभावात्॥ ५-आदिना श्रद्धामेधाविद्याशालामालाहेलादोलादयो ग्राह्याः॥ ६-दिग्वाचके बहुव्रीहिसमासे सर्वनामता वा स्यादित्यर्थः॥ ७-उत्तरस्याः पूर्वस्याश्च दिशोऽन्तरालमिति विग्रहः। अत्र 'दिङ्नामान्यन्तराले' इति बहुव्रीहि-समासः॥ ८-'अम्बा, अक्का, अल्ला' इति सर्वेऽपि मातृवाचकाः॥ ९-वृद्धावस्था॥ १०-गोपालिका॥ ११-मतिशब्दो बुद्धिपर्यायः॥

**ङिति ह्रस्वश्च १। ४। ६॥**

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ, ह्रस्वौ चेवर्णोवर्णौ, स्त्रियां वा नदीसंज्ञौ स्तो ङिति। मत्यै, मतये। मत्याः२। मतेः२॥

**[१]इदुद्भ्याम् ७। ३। ११७॥**

इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेराम्। मत्याम्, मतौ। शेषं हरिवत्॥ एवं [२]बुद्ध्यादयः॥

**त्रिचतुरोः स्त्रियां तिसृचतसृ ७। २। ९९॥**

स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ॥

**अचि र ऋतः ७। २। १००॥**

तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि। [३]गुणदीर्घोत्वानामपवादः। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः। तिसृभ्यः। आमि नुट्॥

**न तिसृचतसृ ६। ४। ४॥**

एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु॥ द्वे[४]। द्वे। द्वाभ्याम्। द्वाभ्याम्। द्वाभ्याम्। द्वयोः। द्वयोः॥ गौरी। गौर्य्यौ। गौर्य्यः। हे गौरि। गौर्य्यै इत्यादि। एवं [५]नद्यादयः॥ लक्ष्मीः। शेषं गौरीवत्॥ एवं [६]तरीतन्त्र्यादयः॥ स्त्री। हे स्त्रि॥

**स्त्रियाः ६। ४। ७९॥**

अस्येयङ् स्यादजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः॥

**वाम्शसोः ६। ४। ८०॥**

---

१-ननु नदीसंज्ञापक्षे मत्यामित्यत्र 'ङेराम् नद्याम्—' इति सूत्रेणैव ङेरामि सिद्धे 'इदुद्भ्याम्' इति व्यर्थमिति चेन्न, गौर्य्यामित्यादौ 'ङेराम्—' इत्यस्य, सख्यौ, पत्यावित्यत्र च 'औत्' इत्यस्य चारितार्थ्येन परत्वात् प्रकृते 'औत्' इत्यस्य प्रवृत्त्यापत्तेः। सति त्वस्मिन् निरवकाशेन अनेन 'औत्' इत्यस्य बाध इत्याशयेनाह—इदुद्भ्यामिति॥ २-आदिना मतिभूतिधृतिकान्तिगतिरुचिदीप्तिश्रुतिस्मृतिप्रभृतयो ग्राह्याः॥ ३-'तिस्रः' इति प्रथमायाम् 'ऋतो ङि—' इति प्राप्तम् 'जसि च' इति वा प्राप्तं गुणम्, 'तिस्रः' इति द्वितीयायां 'प्रथमयोः पूर्वसवर्णः' इति प्राप्तं दीर्घम्, प्रियतिस्र इत्यादौ 'ऋत उत्' इति प्राप्तमुत्त्वं च बाधत इत्यर्थः॥ ४-'द्वि औ' इत्यत्र त्यदाद्यत्वे टापि, 'औङ आपः' इति शीभावे गुणे च सिद्धम्॥ ५-आदिना सरस्वतीनदीब्राह्मणीकुमारीनारीसारङ्गीप्रभृतयो ग्राह्याः॥ ६-'नौकायां तरणिस्तरीः' इत्यमरः। तन्त्रीः, वीणा। आदिना 'अवी धी ह्री' शब्दा ज्ञेयाः॥

ऋहलोर्ण्यत् ३। १। १२४॥

ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्। कार्यम्[1]। हार्यम्[2]। धार्यम्[3]॥

चजोः कु घिण्ण्यतोः ७। ३। ५२॥

चजोः कुत्वं स्यात् घिति ण्यति च परे॥

मृजेर्वृद्धिः ७। २। ११४॥

मृजेरिको वृद्धिः सार्वधातुकार्धधातुकयोः। मार्ग्यः॥

भोज्यं भक्ष्ये ७। ३। ६९॥

भोग्यमन्यत्[5]॥

इति कृत्यप्रक्रिया॥

✫✫✫✫✫

१–'डुकृञ् करणे' तना० उभ०॥ २–'हृञ् हरणे' भ्वा० उभ०॥ ३–'धृञ् धारणे' भ्वा० उभ०॥ ४–'भुज पालनाभ्यवहारयोः' रुधा० उभ०॥ ५–पालनीयमुपभोग्यं चार्थः॥

# अथ पूर्वकृदन्तम्

**ण्वुल्तृचौ ३। १। १३३॥**

धातोरेतौ स्तः। कर्तरि कृदिति कर्त्रर्थे॥

**युवोरनाकौ ७। १। १॥**

यु वु एतयोरनाकौ स्तः। कारकः[1] कर्ता[2]॥

**नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३। १। १३४॥**

नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् स्यात्। नन्दयतीति नन्दनः[3]। जनमर्दयतीति जनार्दनः[4]। लवणः[5]। ग्राही[6]। स्थायी[7]। मन्त्री[8]। पचादिराकृतिगणः॥

**इगुपधज्ञाप्रीकिरः[9] कः ३। १। १३५॥**

एभ्यः कः स्यात्। बुधः[10]। कृशः[11]। ज्ञः। प्रियः। किरः॥

**आतश्चोपसर्गे ३। १। १३६॥**

प्रज्ञः। सुग्लः[12]॥

**गेहे कः ३। १। १४४॥**

गेहे कर्तरि ग्रहेः कः स्यात्। गृहम्[13]॥

**कर्मण्यण् ३। २। १॥**

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्। कुम्भं करोतीति कुम्भकारः[14]॥

**आतोऽनुपसर्गे कः ३। २। ३॥**

---

१-स्त्रियां कारिका क्लीबे कारकम्॥ २-स्त्रियां कर्त्री क्लीबे कर्तृ॥ ३-ण्यन्तस्य 'टुनदि समृद्धौ' इत्यस्य धातोर्णिलोपे कृते इदं रूपं भवति॥ ४-विष्णुपर्यायो जनार्दनशब्दः। अत्र 'अर्द गतौ याचने च' इति ण्यन्तो धातुः भ्वा० पर०॥ ५- 'लूञ् छेदने' क्र्या० उभ०। निपातनादत्र णत्वम्॥ ६-'ग्रह उपादाने' क्र्या० उभ०॥ ७-'ष्ठा गतिनिवृत्तौ' भ्वा० पर०॥ ८-'मत्रि गुप्तभाषणे' चुरा० आ०। 'मन्त्रयते' इति विग्रहः॥ ९-'ज्ञा अवबोधने' क्र्या० उभ०, 'प्रीञ् तर्पणे' क्र्या० उभ०, 'कॄ विक्षेपे' तु० पर०॥ १०-बुधः पण्डितः। अत्र 'बुध अवगमने' दिवा० आ०॥ ११-'कृश तनूकरणे' दिवा० पर०॥ १२-'ग्लै हर्षक्षये' भ्वा० पर०॥ १३-गृहं भवनम्। 'गृह्णाति धान्यादिकम्' इति विग्रहः॥ १४-अस्य कुलालोऽर्थः॥

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात्। अणोऽपवादः। आतो लोप इटि च। गोदः[1]। धनदः। कम्बलदः। अनुपसर्गे किम्? गोसन्दायः। (वा०) मूलविभुजादिभ्यः कः। मूलानि विभुजति मूलविभुजो रथः। आकृतिगणोऽयम्। महीध्रः[2]। कुध्रः॥

**चरेष्टः ३। २। १६॥**

अधिकरणे उपपदे। कुरुचरः[3]॥

**भिक्षासेनादायेषु च ३। २। १७॥**

भिक्षाचरः। सेनाचरः। आदायेति ल्यबन्तम् आदायचरः॥

**कृञो हेतुताच्छील्यानुलोम्येषु ३। २। २०॥**

एषु द्योत्येषु करोतेष्टः स्यात्॥

**अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८। ३। ४६॥**

आदुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः करोत्यादिषु परेषु। यशस्करी विद्या। श्राद्धकरः। वचनकरः॥

**एजेः खश् ३। २। २८॥**

ण्यन्तादेजेः खश् स्यात्॥

**अरुर्द्विषदजन्तस्य मुम् ६। ३। ६७॥**

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते परे न त्वव्ययस्य। शित्त्वाच्छबादिः। जनमेजयतीति जनमेजयः[4]॥

**प्रियवशे वदः[5] खच् ३। २। ३८॥**

प्रियंवदः[6]। वशंवदः[7]॥

---

१-अत्र तादर्थ्ये चतुर्थी। एषां सिद्ध्यर्थं कप्रत्ययो भवतीत्यर्थः॥ २-महीध्रकुध्रौ पर्वतपर्यायौ॥ ३-'कुरुषु चरति' इति विग्रहः। 'चर गतिभक्षणयोः' भ्वा० पर०॥ ४- 'जनम् एजयति कम्पयति' इति लौकिकविग्रहे ण्यन्तात् 'एज्' (एजृ कम्पने भ्वा० आ०) धातोः 'एजेः खश्' इति खश्प्रत्ययेऽनुबन्धलोपे शित्त्वात् सार्वधातुकत्वे शप्प्रत्यये गुणेऽयादेशे पररूपे च जनशब्देन सह समासे विभक्तेर्लुकि 'अरुर्द्विषदजन्तस्य मुम्' इति पूर्वपदस्य मुमागमे समुदायात्सौ रुत्वादिकार्ये 'जनमेजयः' इति॥ ५-'वद व्यक्तायां वाचि' भ्वा० पर०॥ ६-प्रियवक्ता॥ ७-अधीनः॥

**अन्येभ्योऽपि दृश्यन्ते ३। २। ७५॥**

मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः॥

**नेड्वशि कृति ७। २। ८॥**

वशादेः कृत इण् न स्यात्। शॄ हिंसायाम्॥ सुशर्मा प्रातरित्वा[१]॥

**विड्वनोरनुनासिकस्याऽऽत् ६। ४। ४१॥**

अनुनासिकस्याऽऽत्स्यात्। विजायत इति विजावा[२]॥ **ओणृ** अपनयने॥ अवावा[३]। विच्॥ **रुष रिष** हिंसायाम्॥ रोट्। रेट्। सुगण्॥

**क्विप् च ३। २। ७६॥**

अयमपि दृश्यते। उखास्रत्[४]। पर्णध्वत्। वाहभ्रट्॥

**सुप्यजातौ णिनिस्ताच्छील्ये ३। २। ७८॥**

अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये। उष्णभोजी[५]॥

**मनः ३। २। ८२॥**

सुपि मन्यतेर्णिनिः स्यात्। दर्शनीयमानी[६]॥

**आत्ममाने खश्च ३। २। ८३॥**

स्वकर्मके मनने वर्त्तमानान्मन्यतेः सुपि खश् स्यात् चाण्णिनिः। पण्डितमात्मानं मन्यते पण्डितम्मन्यः। पण्डितमानी॥

**खित्यनव्ययस्य ६। ३। ६६॥**

खिदन्ते परे पूर्वपदस्य ह्रस्वः। ततो मुम्। कालिम्मन्या॥

**करणे यजः ३। २। ८५॥**

करणे उपपदे भूतार्थे यजेर्णिनिः कर्तरि। सोमेनेष्टवान् सोमयाजी[७]। अग्निष्टोमयाजी॥

---

१–'प्रातर्गामी' इत्यर्थः। अत्र 'इण् गतौ' इति धातुः॥ २–'जनी प्रादुर्भावे' दिवा० आ०॥ ३–'ओण् वन्' इत्यत्र णकारस्यात्त्वेऽवादेशे सौ दीर्घादिकार्ये सिद्धम्। अत्र 'ओणृ अपनयने' भ्वा० पर० धातुः॥ ४–'उखायाः (पात्रात्) स्रंसते' इति उखास्रत्, अत्र 'अनिदिताम्–' इति नलोपः 'वसुस्रंसु–' इति दत्वं चर्त्वं च ('स्रंसु ध्वंसु भ्रंशु अवस्रंसने' भ्वा० आ०) 'पर्णध्वत्, वाहभ्रट्' इत्यत्र तु 'पर्णाद् ध्वंसते, वाहाद् (अश्वात्) भ्रंशते' इति विग्रहः। आद्ये 'वसुस्रंसु–' इति दत्वम्। अन्ते 'व्रश्च–' इति षत्वम्॥ ५–'उष्णं भुङ्क्ते तच्छीलः' इति वा विग्रहः॥ ६–'मन ज्ञाने' दिवा० आ०॥ ७–'यज देवपूजादौ' भ्वा० उभ०॥

**दृशेः क्वनिप् ३। २। ९४॥**

कर्मणि भूते। पारं दृष्टवान् पारदृश्वा॥

**राजनि युधि कृञः ३। २। ९५॥**

[1] क्वनिप्स्यात्। युधिरन्तर्भावितण्यर्थः। राजानं योधितवान् राजयुध्वा। राजकृत्वा॥

**[2] सहे च ३। २। ९६॥**

कर्मणीति निवृत्तम्। सह योधितवान् सहयुध्वा। सहकृत्वा॥

**[3] सप्तम्यां जनेर्डः ३। २। ९७॥**

**[4] तत्पुरुषे कृति बहुलम् ६। ३। १४॥**

ङेरलुक्। सरसिजम्, सरोजम्॥

**[5] उपसर्गे च संज्ञायाम् ३। २। ९९॥**

प्रजा स्यात्संततौ जने॥

**क्तक्तवतू निष्ठा १। १। २६॥**

एतौ निष्ठासंज्ञौ स्तः॥

**निष्ठा ३। २। १०२॥**

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र तयोरेवेति भावकर्मणोः क्तः। कर्तरि कृदिति कर्तरि क्तवतुः। उकावितौ। [6] स्नातं मया। स्तुतस्त्वया विष्णुः। विश्वं कृतवान् विष्णुः॥

**रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८। २। ४२॥**

रदाभ्यां परस्य निष्ठातस्य नः स्यात्, निष्ठापेक्षया पूर्वस्य धातोर्दस्य च॥ शॄ हिंसायाम्॥ ॠत इत्। रपरः। णत्वम्। शीर्णः। [7] भिन्नः। छिन्नः॥

---

१–'राजन्' शब्दे उपपदे युध्यतेः कृञश्च क्वनिप् स्यादित्यर्थः॥ २–सहशब्दोपपदादन्तर्भावितण्यर्थाद्युध्यतेः क्वनिप् स्यात्॥ ३–सप्तम्यन्ते उपपदे जन्धातोर्डः स्यादित्यर्थः॥ ४–तत्पुरुषे समासे कृदन्ते उत्तरपदे सप्तम्या अलुग् वा। सरसिजं सरोजं वा कमलवाचि॥ ५–उपसर्गे उपपदे 'जनेर्डः' स्यात् संज्ञायाम्॥ ६–अहम् अस्नासिषम्, मया अस्नायि वा इति विग्रहे स्नातम्। अत्र 'कर्तृकर्मणोः कृति' इति षष्ठी तु न, 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति तन्निषेधात्। अत्र 'ष्णा शौचे' अदा० पर० धातुः॥ ७–'भिन्नः, छिन्नः' इत्यत्र क्रमेण 'भिदिर् विदारणे, छिदिर् द्वैधीकरणे' इमौ रुधादी उभ०॥

संयोगादेरातो धातोर्यण्वतः[1] ८। २। ४३॥

निष्ठातस्य नः स्यात्। द्राणः[2]। ग्लानः[3]॥

ल्वादिभ्यः ८। २। ४४॥

एकविंशतेर्लूञादिभ्यः प्राग्वत्। लूनः[4]॥ ज्या धातुः॥ ग्रहिज्येति संप्रसारणम्॥

हलः ६। ४। २॥

अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्य दीर्घः। जीनः[5]॥

ओदितश्च ८। २। ४५।

भुजो भुग्नः। टुओश्वि[6], उच्छूनः[7]॥

शुषः कः ८। २। ५१॥

निष्ठातस्य कः॥ शुष्कः॥

पचो वः ८। २। ५२॥

पक्वः॥ क्षै क्षये॥

क्षायो मः ८। २। ५३॥

क्षामः॥

निष्ठायां सेटि ६। ४। ५२॥

णेर्लोपः। भावितः[8]। भावितवान्॥ दृह हिंसायाम्॥

दृढः स्थूलबलयोः ७। २। २०॥

स्थूले बलवति च निपात्यते॥

दधातेर्हिः ७। ४। ४२॥

तादौ किति। हितम्॥

दो दद् घोः ७। ४। ४६॥

घुसंज्ञकस्य दा इत्यस्य दथ्[9] स्यात् तादौ किति। चर्त्वम्। दत्तः।

---

१-संयोगादेरादन्तस्य यण्वतो धातोः परस्य निष्ठातस्य नत्वम्॥ २-'द्रा कुत्सायां गतौ' अदा० पर०॥ ३-'ग्लै हर्षक्षये'॥ ४-'लूञ् छेदने'॥ ५-जीर्णवयस्कः॥ ६-अयं गतिवृद्ध्यर्थकः भ्वा० पर०॥ ७-वृद्धिं गतः॥ ८-चैत्रो मैत्रमबीभवत्, चैत्रेण मैत्रोऽभावि इति भावितः। भावयतेर्निष्ठासूत्रेण क्तप्रत्यये इडागमे 'निष्ठायाम्—' इति णेर्लोपे सिद्धम्॥ ९-अत्र भाष्यकृता थान्त एव पाठः समर्थितः॥

**लिटः कानज्वा ३। २। १०६॥**

**क्वसुश्च ३। २। १०७॥**

लिटः कानच् क्वसुश्च वा स्तः। तङानावात्मनेपदम्। चक्राणः॥

**म्वोश्च ८। २। ६५॥**

मान्तस्य धातोर्नत्वं म्वोः परतः। जगन्वान्॥

**लटः शतृशानचावप्रथमासमानाधिकरणे ३। २। १२४॥**

अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः। शबादि। पचन्तं[1] चैत्रं पश्य॥

**आने मुक् ७। २। ८२॥**

अदन्ताङ्गस्य मुगागमः स्यादाने परे। पचमानं चैत्रं पश्य। लडित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येऽपि क्वचित्। सन् द्विजः॥

**विदेः शतुर्वसुः ७। १। ३६॥**

वेत्तेः परस्य शतुर्वसुरादेशो वा। विदन्। विद्वान्॥

**तौ सत् ३। २। १२७।**

तौ शतृशानचौ सत्संज्ञौ स्तः॥

**लृटः सद्वा ३। ३। १४॥**

व्यवस्थितविभाषेयम्। तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने[2] लक्षणहेत्वोश्च नित्यम्। करिष्यन्तं करिष्यमाणं पश्य॥

**आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु[3] ३। २। १३४॥**

क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः॥

**तृन् ३। २। १३५॥**

कर्ता कटान्॥

---

१–'पचन्तं चैत्रं पश्य, पचता चैत्रेण कृतम्, पचते चैत्राय देहि' इत्यादिषु प्रथमान्तभिन्नेषु 'चैत्रं चैत्रेण चैत्राय' इत्यादिषु पाकक्रियाकर्तुः सामानाधिकरण्यात् पाक्षिको लटः शत्रादिः॥ २–एवम्, प्रत्यये करिष्यतोऽपत्यं कारिष्यतः, उत्तरपदे करिष्यद्भक्तिः, सम्बोधने हे करिष्यन्, लक्षणहेत्वोः अर्जयिष्यन् वसति॥ ३–अर्थाधिकारोऽयम्, 'भ्राजभास–' इत्येतदन्तशास्त्रविहितप्रत्ययाः यथायथमेष्वर्थेषु बोध्याः॥

[1]जल्पभिक्षकुट्टलुण्टवृङः षाकन् ३। २। १५५॥

षः प्रत्ययस्य १। ३। ६॥

प्रत्ययस्यादिः ष इत्संज्ञः स्यात्। जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी॥

सनाशंसभिक्ष उः ३। २। १६८॥

चिकीर्षुः। आशंसुः। भिक्षुः॥

[2]भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ३। २। १७७॥

विभ्राट्। भाः॥

राल्लोपः ६। ४। २१॥

रेफाच्छ्वोर्लोपः क्वौ झलादौ क्ङिति। धूः। विद्युत्। ऊर्क्। पूः। [3]दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः। जूः। ग्रावस्तुत्। ('क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च)। वक्तीति [4]वाक्॥

च्छ्वोः शूडनुनासिके च ६। ४। १९॥

सतुक्कस्य छस्य वस्य च क्रमात् श् ऊठ् इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। पृच्छतीति प्राट्। आयतं स्तौतीति आयतस्तूः। कटं प्रवते [5]कटप्रूः। जूरुक्तः। श्रयति हरिं श्रीः॥

[6]दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३। २। १८२॥

दाबादेः ष्ट्रन् स्यात्करणेऽर्थे। दात्यनेन दात्रम्। नेत्रम्॥

---

१-एभ्यः षाकन् प्रत्ययः स्यात्। 'जल्प व्यक्तायां वाचि' भ्वा० पर०। 'भिक्ष भिक्षायाम्' भ्वा० आ०। 'कुट्ट छेदने' भ्वा० पर०। 'लुटि स्तेये' भ्वा० पर०। 'वृङ् सम्भक्तौ' क्र्या० आ०॥ २-'टुभ्राजृ दीप्तौ' भ्वा० पर०। 'भास् दीप्तौ' भ्वा० आ०। 'धुर्वी हिंसायाम्' भ्वा० पर०। 'द्युत दीप्तौ' भ्वा० आ०। 'ऊर्ज बलप्राणनयोः' भ्वा० पर०। 'पॄ पालनपूरणयोः' जुहो० पर०। 'जु गतौ' सौत्रः। 'ग्रावन्' शब्दपूर्वः 'ष्टुञ् स्तुतौ' धातुः, 'ग्रावाणं स्तौति' इति ग्रावस्तुत्॥ ३-'अन्येभ्योऽपि दृश्यते' इत्यग्रिमसूत्राद् दृशिग्रहणमपकृष्य तस्य च विध्यन्तरोपसंग्रहार्थत्वस्वीकाराज् जुधातोः क्विब् दीर्घश्च, इत्येव सूचयति- 'दृशि-' इत्यादिना॥ ४-'वच परिभाषणे' अदा० पर०॥ ५-कटप्रूः 'प्रुङ् गतौ' भ्वा० आ०, कटं तृणमयं स्तरणं तस्य रचयिता॥ ६-'दाप् लवने' अदा० पर०। 'णीञ् प्रापणे' भ्वा० उभ०। 'शसु

तितुत्रतथसिसुसरकसेषु च ७।२।९॥[1]

एषां दशानां कृत्प्रत्ययानामिण् न। शस्त्रम्। योत्रम्[2]। योक्त्रम्।

हिंसायाम्' भ्वा० पर०। 'यु मिश्रणामिश्रणयोः' अदा० पर०। 'युजिर् योगे' रुधा० उभ०। 'ष्टुञ् स्तुतौ' अदा० उभ०। 'तुद व्यथने' तुदा० उभ०। 'षिञ् बन्धने' स्वा० उभ०। 'षिच क्षरणे' तुदा० उभ०। 'मिह सेचने' (मूत्रत्यागे) 'पत्लृ पतने' उभौ भ्वा० पर०। 'दंश दंशने' भ्वा० पर०। 'णह बन्धने' दिवा० उभ०॥

१–'ति' 'तु' 'त्र' 'त' 'थ' 'सि' 'सु' 'सर' 'क' 'स'– इत्येतेषु कृत्प्रत्ययेषु इडागमो न भवति। 'ति' इति क्तिन्क्तिचोः सामान्यग्रहणम्; क्तिन्–दीप्तिः। क्तिच्–दीप्तिः। 'तु' इति 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इत्यौणादिकः 'तुन्' प्रत्ययः; सेतुः, सक्तुः इत्यादि। 'त्र' इति 'दाम्नीशस–युयुज–' इत्यादिना विहितः 'ष्ट्रन्'; दात्रम्, पात्रम् इत्यादि। उणादिष्वपि 'सर्वधातुभ्यः ष्ट्रन्' इति ष्ट्रन् भवति; तन्त्रमित्यादि। 'त' इति 'हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्' इत्यौणादिकः 'तन्'; हस्तः इत्यादि। औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते न तु कृदन्तस्य; 'हसितम्' इत्येव तत्र भवति। 'थ' इति 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इत्यौणादिकः 'क्थन्', हथः, कुष्ठम्, काष्ठम् इत्यादि। 'सि' इति 'प्लुषिकुषिशुषिभ्यः क्सिः' इत्यौणादिकः 'क्सिः'; कुक्षिः इत्यादि। 'सु' इति 'इषेः क्सुः' (उ० सू०) 'क्सुः'; इक्षुः। 'सर' इति 'अशेः सरः' (उ० सू०) 'सरः'; अक्षरम्।

तथा च भाष्यम्–

अक्षरं न क्षरं विद्यादश्नोतेर्वा सरोऽक्षरम्।
वर्णं वाहुः पूर्वसूत्रे किमर्थमुपदिश्यते॥ इति॥

'क' इति 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' (उ० सू०) इति 'कन्' प्रत्ययः; शल्कः। 'स' इति 'वृतॄवदिहनिकमिकषिभ्यः सः' इत्यौणादिकः 'सः'; वत्सः इत्युदाहरणानि। एतत्सूत्रापवादवार्तिकम्— 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' ग्रहादयो ग्रहप्रकारा येषामिट् क्तिनि दृष्यते; निगृहीतिः, निपठितिः, उपस्निहितिः, निकुचितिः। कृतीत्येव, नेह रोदिति, स्वपिति। यदाहुः—

वृद्धिस्तन्तुश्च योत्रं च गर्तः काष्ठं वृषिस्तथा।
जागृषुर्धूसरोऽर्कश्च हृषश्चेत्यग्रहादिषु॥ इति॥

२–योत्रं योक्त्रं च वृषादेर्गले युगबन्धनरज्जोर्नाम॥

स्तोत्रम्। तोत्त्रम्[1]। सेत्रम्[2]। सेक्त्रम्[3]। मेढ्रम्[4]। पत्रम्[5]। दंष्ट्रा। नद्ध्री[6]॥

[7]अर्तिलूधूसूखनसहचर इत्रः ३। २। १८४॥

अरित्रम्[8]। लवित्रम्[9]। धुवित्रम्[10]। सवित्रम्। खनित्रम्[11]। सहित्रम्। चरित्रम्॥

पुवः संज्ञायाम् ३। २। १८५॥

पवित्रम्॥

इति पूर्वकृदन्तम्॥

---

१-वेणुदण्डोवृषभादिप्रेरणदण्डो वा॥ २-सेत्रं बन्धनम्॥ ३-सेचनार्थं यन्त्रं पात्रं वा॥ ४-जननेन्द्रियम्॥ ५-'पत्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' इति मेदिनी॥ ६-अत्र 'नहो धः' इति हस्य धः 'झषस्तथोर्धोऽधः' इति तस्य धः, नद्ध्री चर्ममयी रज्जुः॥ ७-'ऋ गतौ' भ्वा० पर०। 'लूञ् छेदने' क्र्या० उभ०। 'धूञ् विधूनने' तुदा० पर०। 'षू प्रेरणे' तुदा० पर०। 'खनु अवदारणे' भ्वा० पर०। 'षह मर्षणे' भ्वा० आ०। 'चर गतिभक्षणयोः' भ्वा० पर०॥ ८-नौपृष्ठस्थ चालनदण्डो यो हि नौचालनसमये जले निपात्यते॥ ९-छेदन-शस्त्रम। 'लूञ् छेदने' धातुः॥ १०-कुटादित्वात् प्रत्ययस्य ङित्त्वे उवङ्। 'धुवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा' इत्यमरः॥ ११-खननशस्त्रं कुद्दालादि॥

# अथोणादयः

कृवापाजिमिस्वदिसाध्यशूभ्य उण्॥ १॥ करोतीति कारुः। वातीति वायुः। पायुर्गुदम्। जायुरौषधम्। मायुः पित्तम्। स्वादुः। साध्नोति परकार्यमिति साधुः। आशु शीघ्रम्॥

**उणादयो बहुलम् ३। ३। १॥**

एते वर्तमाने संज्ञायां च बहुलं स्युः। केचिदविहिता अप्यूह्याः॥[1]

**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।**
**कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥**

इत्युणादयः॥

---

१-केचिदविहिता अप्यूह्या इत्युक्तम्, कथमूह्याः? इति दर्शयति संज्ञास्वित्यादिना; अयं भावः—संज्ञासु संज्ञाशब्देषु धातुरूपाणि प्रकल्प्य ततः परं प्रत्ययाः कल्पनीयाः। प्रत्ययेष्वपि गुणवृद्धिसम्प्रसारणतदभावादिकार्यानुसारेण ञित्त्वं ङित्त्वं चेत्याद्यनुबन्धं जानीयात्। एतदेवोणादिषु शास्त्रम्—शासनार्हमिति भावः। यथा 'ऋफिड्डः' इति संज्ञाशब्दः। अत्र 'ऋ' धातुः प्रकृतिः, फिड्डप्रत्ययः, गुणाभावदर्शनाच्च प्रत्ययस्य कित्त्वमित्याद्यूह्यतं॥

# अथोत्तरकृदन्तम्

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३। ३। १०॥**

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं[1] याति। कृष्णं दर्शको याति॥

**कालसमयवेलासु तुमुन् ३। ३। १६७॥**

कालार्थेषूपपदेषु तुमुन्। कालः समयो वेला वा भोक्तुम्॥

**भावे ३। ३। १८॥**

सिद्धावस्थापन्ने[2] धात्वर्थे वाच्ये धातोर्घञ्। पाकः॥

**अकर्तरि च कारके संज्ञायाम् ३। ३। १९॥**

कर्तृभिन्ने कारके घञ् स्यात्॥

**घञि[3] च भावकरणयोः ६। ४। २७ ॥**

रञ्जेर्नलोपः स्यात्। रागः। अनयोः किम्! रज्यत्यस्मिन्निति रङ्गः[4]॥

**निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३। ३। ४१॥**

एषु चिनोतेर्घञ् आदेश्च ककारः। उपसमाधानं राशीकरणम्। निकायः। कायः[5]। गोमयनिकायः॥

**एरच् ३। ३। ५६॥**

इवर्णान्तादच्। चयः[6]। जयः॥

**ॠदोरप् ३। ३। ५७॥**

---

१–अत्र 'अव्ययकृतो भावे' इति वार्तिकाद् भावे प्रत्ययः। 'कृन्मेजन्तः' इत्यव्ययत्वम्, 'सृजिदृशोः—' इत्यमागमः॥ कृष्णं दर्शको यातीत्यत्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठ्याः प्रतिषेधः। 'वु' इत्यस्य 'युवोरनाकौ' इत्यकादेशश्च॥ २–यत्र क्रियायाः क्रियान्तराकाङ्क्षा सा सिद्धावस्था॥ ३–भावे करणे च यो घञ् तस्मिन् परे रञ्जेर्नस्य लोपः स्यात्, राग इत्यत्र 'रञ्जनम्' 'रज्यतेऽनेन' इति वा विग्रहः। 'रञ्ज रागे' भ्वा० उभ०॥ ४–रङ्गो नाट्यशाला॥ ५–चीयतेऽस्मिन्नस्थ्यादिकमसौ कायः शरीरमिति यावत्॥ ६–'स्याच्चयो वप्रमस्त्रियाम्' इत्यमरः, 'चयः समूहे प्राकारे मूलबन्धे समाहृतौ' इति मेदिनी॥

ऋवर्णान्तादुवर्णान्ताच्चाप्। करः[1]। गरः[2]। यवः[3]। लवः[4]। स्तवः[5]। पवः[6]॥ (घञर्थे कविधानम्।) प्रस्थः[7]। विघ्नः[8]॥

**ड्वितः क्त्रिः ३। ३। ८८॥**

**क्त्रेर्मम्नित्यम् ४। ४। २०॥**

क्त्रिप्रत्ययान्तान्मप् निर्वृत्तेऽर्थे। पाकेन निर्वृत्तं पक्त्रिमम्। डुवप् उप्त्रिमम्[9]॥

**ट्वितोऽथुच् ३। ३। ८९॥**

टुवेपृ कम्पने, वेपथुः॥

**यजयाचयतविच्छप्रच्छरक्षो नङ्[10] ३। ३। ९०॥**

यज्ञः। याच्ञा। यत्नः। विश्नः[11]। प्रश्नः। रक्ष्णः॥

**स्वपो नन् ३। ३। ९१॥**

स्वप्नः[12]॥

**उपसर्गे घोः किः[13] ३। ३। ९२॥**

प्रधिः। उपधिः॥

**स्त्रियां क्तिन् ३। ३। ९४॥**

स्त्रीलिङ्गे भावे क्तिन् स्यात्। घञोऽपवादः। कृतिः। स्तुतिः। (ऋल्वादिभ्यः[14] क्तिन्निष्ठावद्वाच्यः।) तेन नत्वम्। कीर्णिः[15]।

---

१-'बलिहस्तांशवः कराः' इत्यमरः। 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः' इति मेदिनी॥ २-निगरणम्॥ ३-'यवो धान्येऽपृथक्कृतौ' इति हैमः॥ ४-'लवोऽभिलावो लवने' इत्यमरः॥ ५-स्तोत्रम्॥ ६-'निष्पावः पवने पवः' इत्यमरः। पवो धान्यादीनां बहुलीकरणम्॥ ७-कित्त्वात् 'आतो लोप इटि च' इत्यालोपः। प्रस्थः परिमाणविशेषः॥ ८-'गमहनजन—' इत्युपधालोपे 'हो हन्तेः—' इति कित्त्वम्। विघ्नः—अन्तरायो विघातश्च। ९-'वापेन निर्वृत्तम्' इति विग्रहः॥ १०-'यज देवपूजादौ' 'टुयाचृ याच्ञायाम्' उभौ भ्वा० उभ०। 'यती प्रयत्ने' भ्वा० आ०। 'विच्छ गतौ' भ्वा० पर०। 'रक्ष रक्षणे' भ्वा० पर०॥ ११-भाषार्थो विच्छधातुरत्र॥ १२-'ञिष्वप् शये' अदा० पर०॥ १३-उपसर्गे उपपदे घुसंज्ञकात् किः प्रत्ययो भावेऽकर्तरि कारके च। उपधी रथचक्रम्, प्रधिः—चक्रस्य परिधिः॥ १४-ॠकारान्ताल्ल्वादिभ्यश्च परः क्तिन् प्रत्ययो निष्ठावद् भवतीति तदर्थः॥ १५-विक्षेपः॥

लूनिः[१]। धूनिः[२]। पूनिः[३]। (संपदादिभ्य क्विप्)। संपत्। विपत्। आपत्। (क्तिन्नपीष्यते)। संपत्तिः। विपत्तिः। आपत्तिः॥

**ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३। ३। ९७॥**

एते[४] निपात्यन्ते॥

**ज्वरत्वरस्रिव्यविमवामुपधायाश्च[५] ६। ४। २०॥**

एषामुपधावकारयोरूठ् अनुनासिके क्वौ झलादौ क्ङिति॥ अतः क्विप्। जूः[६]। तूः[७]। स्रूः[८]। ऊः[९]। मूः[१०]॥

**इच्छा ३। ३। १०१॥**

इषेर्निपातोऽयम्॥

**अ प्रत्ययात् ३। ३। १०२॥**

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात्। चिकीर्षा[११]। पुत्रकाम्या[१२]॥

**गुरोश्च हलः ३। ३। १०३॥**

गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात्। ईहा[१३]॥

**ण्यासश्रन्थो युच् ३। ३। १०७॥**

अकारस्यापवादः। कारणा। हारणा॥

**नपुंसके भावे क्तः ३। ३। ११४॥**

**ल्युट्[१४] च ३। ३। ११५॥**

हसितम्, हसनम्॥

**पुंसि संज्ञायां घः प्रायेण ३। ३। ११८॥**

---

१–छेदनम्॥ २–कम्पनम्॥ ३–पवित्रतेत्यर्थः॥ ४–'अव रक्षणे' 'यु मिश्रणे' जू धातुः सौत्रः, 'षो अन्तकर्मणि' हि गतौ' 'कृत संशब्दने' अत्रैते धातवः॥ ५–'ज्वर रोगे' भ्वा० पर०। 'ञित्वरा संभ्रमे' भ्वा० आ०। 'स्रिवु गतिशोषणयोः' दिवा० पर०। 'अव रक्षणे' 'मव बन्धने' भ्वा० पर०॥ ६–रुग्णः॥ ७–शीघ्रकारी॥ ८–शोषको गन्ता वा॥ ९–रक्षकः॥ १०–बन्धकः॥ ११–कर्तुमिच्छा॥ १२–पुत्रस्येच्छा॥ १३–'ईह चेष्टायाम्' भ्वा० आ०। 'इच्छा काङ्क्षा स्पृहेहा' इत्यमरः॥

१४–क्तो ल्युड् नपुंसके भावे स्त्रियां क्तिन्नादयो यतः।
अतो घञजपः पुंसि परिशेषादिति स्थितिः॥

**छादेर्घेऽद्व्युपसर्गस्य ६। ४। ९६॥**

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे परे। दन्ताश्छाद्यन्तेऽनेनेति दन्तच्छदः[1]। आकुर्वन्त्यस्मिन्नित्याकरः[2]॥

**अवे तॄस्त्रोर्घञ् ३। ३। १२०॥**

अवतारः[3] कूपादेः। अवस्तारो[4] जवनिका॥

**हलश्च ३। ३। १२१॥**

हलन्ताद् घञ्। घापवादः। रमन्ते योगिनोऽस्मिन्निति रामः। अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः[5]॥

**ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३। ३। १२६॥**

करणाधिकरणयोरिति निवृत्तम्। एषु दुःखसुखार्थेषूपपदेषु खल् तयोरेवेति भावे कर्मणि च। कृच्छ्रे—दुष्करः कटो भवता। अकृच्छ्रे-ईषत्करः। सुकरः॥

**आतो युच् ३। ३। १२८॥**

खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः[6]। सुपानः॥

**अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३। ४। १८॥**

प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात्। प्राचां[7] ग्रहणं पूजार्थम्। अमैवाव्ययेनेति[8] नियमान्नोपपदसमासः। दो दद्घोः। अलं दत्त्वा। घुमास्थेतीत्वम्। पीत्वा खलु। अलंखल्वोः किम्? मा कार्षीत्। प्रतिषेधयोः किम्? अलंकारः॥

**समानकर्तृकयोः पूर्वकाले ३। ४। २१॥**

---

१-ओष्ठः॥ २-खनिः॥ ३-सोपानमित्यर्थः। अत्र 'तॄ प्लवनतरणयोः' इति धातुः, भ्वा० पर०॥ ४-'स्तॄञ् आच्छादने' क्र्या० उभ०॥ ५-अत्र 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः (अपामार्गो हिन्दीभाषायाम् 'चिचिड़ा' इति प्रसिद्धः) 'मृजू शुद्धौ' इति धातुः॥ ६-अत्र 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम् 'पा पाने' धातुः॥ ७-'अव्ययकृतो भावे' इति वचनात् क्त्वाप्रत्ययो भावे, स च ल्युट्प्रत्ययस्य बाधकः, वासरूपन्यायेन विकल्पेन भविष्यति, इत्येवं विकल्प-सिद्धौ प्राचां ग्रहणं व्यर्थमित्यभिप्रेत्याह प्राचामिति॥ ८-अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते, इति नियमसूत्रार्थः; प्रकृते च न अम् किन्तु क्त्वा, अतः समासाभाव इति भावः॥

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। भुक्त्वा व्रजति। द्वित्वमतन्त्रम्। भुक्त्वा पीत्वा व्रजति॥

**न क्त्वा सेट् १। २। १८॥**

सेट् क्त्वा किन्न स्यात्। शयित्वा। सेट् किम्? कृत्वा॥

**रलो व्युपधाद्धलादेः संश्च १। २। २६॥**

इवर्णोवर्णोपधाद्धलादेः रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतित्वा, द्योतित्वा। लिखित्वा, लेखित्वा। व्युपधात्किम्? वर्तित्वा। रलः किम्? सेवित्वा। हलादेः किम्? एषित्वा। सेट् किम्? भुक्त्वा॥

**उदितो वा ७। २। ५६॥**

उदितः परस्य क्त्व इड्वा। शमित्वा[1], शान्त्वा। देवित्वा, द्यूत्वा[2]। दधातेर्हिः[3] हित्वा॥

**जहातेश्च क्त्वि ७। ४। ४३॥**

हित्वा। हाङस्तु-हात्वा॥

**समासेऽनञ्पूर्वे क्त्वो ल्यप् ७। १। ३७॥**

अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात्। तुक्। प्रकृत्य। अनञ् किम्? अकृत्वा॥

**आभीक्ष्ण्ये णमुल् च ३। ४। २२॥**

आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च॥

**नित्यवीप्सयोः ८। १। ४॥**

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात्। आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु च कृदन्तेषु च। स्मारं स्मारं नमति शिवम्। स्मृत्वा स्मृत्वा। पायम्पायम्[4]। भोजम्भोजम्। श्रावं श्रावम्॥

**अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३। ४। २७॥**

---

१-अत्र 'शमु उपशमे' इति धातुः दिवा० पर०। 'शान्त्वा' इत्यत्र 'अनुनासिकस्य क्विझलोः—' इति दीर्घः॥ २-'च्छ्वोः शूडनुनासिके च' इत्यूट्॥ ३-'ओहाक्' धातोर्ह्यादेशः स्यात् क्त्वाप्रत्यये परे॥ ४-अत्र 'आतो युक्-' इति युक्॥

एषु कृञो णमुल् स्यात्। सिद्धोऽप्रयोगोऽस्य एवम्भूतश्चेत् कृञ्। व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारम्। एवङ्कारम्। कथङ्कारम्। इत्थङ्कारं भुङ्क्ते। सिद्धेति किम्? शिरोऽन्यथा कृत्वा भुङ्क्ते॥ इत्युत्तरकृदन्तम्॥

॥ इति कृदन्तम्॥

# अथ[1] विभक्त्यर्थाः

[2]प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २। ३। ४६॥

[3]नियतोपस्थितिकः प्रातिपदिकार्थः। मात्र[4]शब्दस्य प्रत्येकं योगः प्रातिपदिकार्थमात्रे [5]लिङ्गमात्राद्याधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा

---

१-'स्वौजसमौट्—' इति विहितस्वादीनां जिज्ञासितार्थनिरूपणायाह—अथेति॥ २-प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं च तानि प्रातिपदिकार्थलिङ्गपरिमाणवचनानि, तान्येव तन्मात्रम्, तस्मिन्, इति विग्रहः, अत्र वचनशब्दान्ते द्वन्द्वे कृते मात्रान्तरयोर्नित्यसमासवचनं क्लीबत्वं चेति मयूरव्यंसकादयश्चेत्येतदन्तर्गणसूत्रेण समासः॥ ३-पदसमुदायरूपवाक्यार्थज्ञाने पदार्थज्ञानं कारणमित्यत आह—नियतेति। यस्मिन् प्रातिपदिके उच्चारिते सति यस्यार्थस्य नियमेन भानं स प्रातिपदिकार्थः। तन्मात्रे प्रथमा इत्यर्थः। यथा 'उच्चैः' इत्युच्चारिते उच्चाधिकरणस्य 'नीचैः' इत्युच्चारितेऽधोऽधिकरणस्य 'कृष्णः' इत्यत्र पुंस्त्वविशिष्टवासुदेवरूपार्थस्य 'श्रीः' इत्यत्र स्त्रीत्वविशिष्टलक्ष्मीरूपार्थस्य 'ज्ञानम्' इत्यत्र क्लीबत्वविशिष्टान्तर्बोधस्य च भानात्तेऽर्था नियतोपस्थितिकाः। तत्रार्थे 'उच्चैस्' इत्यादिशब्दात् प्रथमा॥ ४-'द्वन्द्वादौ द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति वचनात्॥ ५-यद्यपि लिङ्गमात्र एवार्थ उचितस्तथापि प्रातिपदिकार्थभानं विना लिङ्गमात्रार्थभानासम्भवात् 'तदाधिक्ये' इत्युक्तम्। एवं च प्रातिपदिकार्थापेक्षया यत्र लिङ्गलिङ्गत्वे अधिके भासेते तत्रापि प्रथमा, न तु तत्र ताभ्यामधिके कर्मत्वादावित्यर्थः। अस्योदाहरणं तटः, तटी, तटमिति, इदमत्रावधारणीयम्; त्रिविधा नाम शब्दा अलिङ्गा नियतलिङ्गा अनियतलिङ्गाश्च। तत्राद्या द्वितये प्रातिपदिकार्थमात्रस्योदाहरणानि तृतीया लिङ्गमात्राद्याधिक्यस्य। अनियतलिङ्गेषु प्रातिपदिकमात्रेण कस्यापि लिङ्गस्य नियमेनाभानात् तेषु प्रथमार्थं लिङ्गग्रहणम्॥

स्यात्। प्रातिपदिकार्थमात्रे—उच्चैः। नीचैः। कृष्णः। श्रीः। ज्ञानम्। लिङ्गमात्रे—तटः, तटी, तटम्। परिमाणमात्रे[1]—द्रोणो व्रीहिः। वचनं[2] संख्या। एकः, द्वौ, बहवः॥

**सम्बोधने च २। ३। ४७॥**

प्रथमा स्यात्। हे राम।

इति प्रथमा।

**कर्तुरीप्सिततमं कर्म १। ४। ४९॥**

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्॥

**कर्मणि द्वितीया २। ३। २॥**

अनुक्ते कर्मणि द्वितीया स्यात्। हरिं[3] भजति। अभिहिते[4] तु कर्मादौ प्रथमा—हरिः सेव्यते। लक्ष्म्या सेवितः॥

**अकथितं च १। ४। ५१॥**

अपादानादिविशेषैरविवक्षितं[5] कारकं कर्मसंज्ञं स्यात्।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।[6]

---

१–द्रोणशब्दात्परिमाणविशेषस्य नियमेनोपस्थितावपि व्रीहिणा सह प्रथमार्थस्य भेदान्वयलाभाय परिमाणग्रहणम्॥ २–एकत्वादीनां प्रकृत्या उक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रथमा न स्यादतो वचनग्रहणम्॥ ३–अत्र चैत्रः कर्ता तद्वृत्तिः क्रिया प्रीत्यनुकूलव्यापाररूपा तया क्रियया आप्तुं संबन्धुमिष्टतमम् इच्छोद्देश्यं हरिपदार्थरूपं कारकं तस्य कर्मसंज्ञा। मद्वृत्तिव्यापारजन्यप्रीतिरूपफलाश्रयो हरिर्भवतु–ईदृशेच्छोद्देश्यत्वं हरिपदार्थस्य। एवं ग्रामः संयोगाश्रयो भवतु। तण्डुलः विक्लित्त्याश्रयो भवतु; इत्यादिरूपेच्छा तत्र तत्रोहनीया॥ ४–यदुक्तम्—

यस्मिन्नर्थे विधीयन्ते त्यादितव्यादितद्धिताः।
समासो वा भवेद्यत्र स उक्तः प्रथमा ततः॥

५–अपादानसम्प्रदानाधिकरणत्वरूपेणाविवक्षितं कर्मत्वेन विवक्षितं कारकं कर्मसंज्ञमित्यर्थः॥ ६–ननु हस्तं निदधाति वृक्ष इत्यत्रापि कर्मत्वविवक्षाप्रसङ्ग इत्यत आह दुहित्यादि—दुहादीनां नीप्रभृतीनाञ्च धातूनां यत्कर्म तत्सम्बन्धी योऽर्थस्तत्रापादानत्वाद्यविवक्षायां कर्मत्वविवक्षायामेव कर्मसंज्ञा नान्यत्र, अत्राविवक्षा द्विधा अपादानत्वादिप्राप्तिपूर्विका सर्वथा तदप्राप्तिरूपा च, तत्र 'दुह् दण्ड् चिञ् जि

कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥ १॥

गां दोग्धि पयः। बलिं याचते वसुधाम्। तण्डुलानोदनं पचति। गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते शास्ति वा। शतं जयति देवदत्तम्। सुधां क्षीरनिधिं[1] मथ्नाति। देवदत्तं शतं मुष्णाति। ग्राममजां नयति हरति कर्षति वहति वा। अर्थनिबन्धनेयं[2] संज्ञा। बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि॥

इति द्वितीया।

**स्वतन्त्रः कर्ता १। ४। ५४॥**

क्रियायां[3] स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात्॥

**साधकतमं करणम् १। ४। ४२॥**

क्रियासिद्धौ प्रकृष्टोपकारकं[4] करणसंज्ञं स्यात्॥

**कर्तृकरणयोस्तृतीया २। ३। १८॥**

अनभिहिते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली॥

इति तृतीया।

---

मथ् मुष्' एषु अपादानत्वाविवक्षायां कर्मत्वविवक्षायाञ्च कर्मत्वे द्वितीया, तेष्वपादानत्वविक्षायां पञ्चम्यपि। 'रुध्' धातुप्रयोगेऽधिकरणत्वाविवक्षायां कर्मत्वे द्वितीया, अधिकरणत्वविक्षायां च सप्तमी। 'ब्रू, शासु' इत्यनयोः प्रयोगे सम्प्रदानत्वाविवक्षायां कर्मत्वे द्वितीया। अन्यत्र सर्वत्राप्राप्तिरूपैवाविवक्षा, तेषु च सर्वथा कर्मसंज्ञैवेष्टेति भावः। अत्र सूत्रोदाहरणेऽपादानत्वाद्यविवक्षया यत्कर्मत्वं तद् गौणकर्मत्वेन व्यवह्रियते॥

१-अत्र क्षीरनिधेर्गौणकर्मत्वं मथ्नातेरालोडनपूर्वकनिःसारणार्थत्वात्। अत एव 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' इति भारविप्रयोगः संगच्छते॥ २-दुहादीनां धातूनां येऽर्थास्तद्वाचकधातुमात्रनिमित्तकेयं संज्ञेत्यर्थः॥ ३-पाकादिरूपायां क्रियायां यः पदार्थः स्वातन्त्र्येण वक्त्रा विवक्षितः, विवक्षा च 'इयं क्रिया अनेनैव साधनीया' इति रूपेण, तदानीं स पदार्थः कर्तृसंज्ञः। अतएव 'स्थाली पचति, अग्निः पचति' इत्यादि प्रयोगा भवन्ति॥ ४-यद्व्यापाराव्यवधानेन क्रियाफलनिष्पत्तिः तत्प्रकृष्टम्। सर्वाणि कारकाणि यद्यपि क्रियोपकारकाणि तथापीदमतिशयेन क्रियोपकारकमतस्तमप्प्रयोगः संगच्छते। सकृदनेकेषामतिशयेनोपकारकत्वाभावादेकस्यैवैकस्मिन् वाक्ये करणसंज्ञा इति सम्प्रदायः॥

**कर्मणा यमभिप्रैति स सम्प्रदानम् १। ४। ३२॥**

दानस्य[1] कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात्॥

**चतुर्थी सम्प्रदाने २। ३। १३॥**

विप्राय गां ददाति॥

**नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च २। ३। १६॥**

एभिर्योगे चतुर्थी। हरये नमः। प्रजाभ्यः स्वस्ति। अग्नये स्वाहा। पितृभ्यः स्वधा। अलमिति पर्याप्त्यर्थग्रहणम्। तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि॥

इति चतुर्थी।

**ध्रुवमपायेऽपादानम् १। ४। २४॥**

अपायो विश्लेषस्तस्मिन्साध्ये[2] यद् ध्रुवमवधिभूतं कारकं तदपादानं स्यात्॥

**अपादाने पञ्चमी २। ३। २८॥**

ग्रामादायाति। धावतोऽश्वात्पततीत्यादि॥

इति पञ्चमी।

**षष्ठी शेषे २। ३। ५०॥**

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः शेषस्तत्र षष्ठी। राज्ञः पुरुषः। कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते। मातुः स्मरति। एधो दकस्योपस्कुरुते। भजे शम्भोश्चरणयोः॥

इति षष्ठी।

---

१–इदमुपलक्षणम्, तथा च कर्ता क्रियामात्रस्य कर्मणा सह सम्बन्धुं यं पदार्थमभिप्रैति स सम्बन्धोद्देश्यः सम्प्रदानसंज्ञः। अत एव विप्राय गां ददाति इतिवत् 'चैत्रो मैत्राय वार्तां कथयति, तदाचक्ष्वासुरेन्द्राय, तुभ्यं हितमुपदिशामि' इत्यादि प्रयोगाः संगच्छन्ते॥ २–विश्लेषो विभागानुकूलव्यापारस्तस्मिन् साध्ये जननीये यद्ध्रुवमुदासीनं तादृशव्यापारानाश्रयं तदपादानसंज्ञम्। एवञ्च विभागजनकव्यापारानाश्रयत्वे सति विभागाश्रयत्वमपादानत्वम्॥

**आधारोऽधिकरणम् १। ४। ४५॥**

[1]कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात्॥

**सप्तम्यधिकरणे च २। ३। ३६॥**

अधिकरणे सप्तमी स्यात्, चकाराद्दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा। कटे[2] आस्ते। स्थाल्यां[3] पचति। मोक्षे[4] इच्छास्ति। सर्वस्मिन्[5]नात्मास्ति। वनस्य दूरे अन्तिके वा॥

इति सप्तमी॥

[6]इति विभक्त्यर्थाः॥

---

१–साक्षाद्व्यापाररूपक्रियाया आधारः कर्ता, फलरूपाया आधारः कर्म, ताभ्यां बाधात् परम्परया क्रियाधारस्यैतत्संज्ञा। तथा हि 'कटे आस्ते' इत्यत्र कर्ता चैत्रादिस्तन्निष्ठास्तिक्रियायाः परम्परयाधारस्य कटस्याधिकरणसंज्ञा। एवम् 'स्थाल्यां पचति' इत्यत्र साक्षाद् विक्लित्तेराधारस्तण्डुलस्तदाधारः स्थाली परम्परया विक्लित्तेरप्याधारः। एवं सर्वत्रोहनीयम्॥ २–आसनक्रियाकर्तृद्वारा आसनक्रियाया आधारः कटोऽधिकरणसंज्ञः॥ ३–पाकक्रियाकर्मतण्डुलादिद्वारा पाकक्रियाया आधारः स्थाली अधिकरणसंज्ञा॥ ४–अस्तिक्रियाकर्तृभूतेच्छाद्वारा अस्तिक्रियाया आधारो मोक्षोऽधिकरणसंज्ञः॥ ५–अस्तिक्रियाकर्तृभूतात्मद्वारा अस्तिक्रियाया आधारः सर्वमधिकरणसंज्ञम्॥ ६–सर्वासां विभक्तीनामेकत्र मेलनं यथा—

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर॥

# अथ समासाः

तत्रादौ केवलसमासः। समासः पञ्चधा। तत्र [१]समसनं समासः। स च [२]विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः॥ १॥ प्रायेण [३]पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः॥ २॥ प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः॥ [४]तत्पुरुषभेदः कर्मधारयः। [५]कर्मधारयभेदो द्विगुः॥ ३॥ प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः॥ ४॥ प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः॥ ५॥

**समर्थः पदविधिः २। १। १॥**

[६]पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः॥

**प्राक्कडारात्समासः २। १। ३॥**

कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते॥

**सह सुपा २। १। ४॥**

सुप् सुपा सह वा समस्यते॥ समासत्वात्प्रातिपदिकत्वेन सुपो लुक्। [७]परार्थाभिधानं वृत्तिः। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। [८]वृत्त्यर्थावबोधकं[९] वाक्यं विग्रहः। स च लौकिको[१०]ऽलौकिकश्चेति[११] द्विधा। तत्र पूर्वं भूत इति लौकिकः। 'पूर्व[१२] अम् भूत सु' इत्यलौकिकः। भूतपूर्वः। भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः। (इवेन समासो विभक्त्यलोपश्च)। वागर्थौ इव वागर्थाविव॥

इति केवलसमासः॥ १॥

---

१–बहूनां पदानां मिलित्वैकपदभवनम्॥ २–विशेषसंज्ञा अव्ययीभावादिरूपास्ताभिर्विनिर्मुक्त इत्यर्थः॥ ३–पूर्वपदस्यार्थः प्रधानं यत्र। एवमन्यत्रापि॥ ४–'तत्पुरुषः समानाधिकरणः कर्मधारयः' इति सूत्रात्॥ ५–'संख्यापूर्वो द्विगुः' इति सूत्रात्॥ ६–पदमुद्दिश्य विधीयमानसमाससंज्ञादिः पदविधिः स समर्थस्य परस्परान्वितार्थस्य आश्रितो भवति अर्थात् समर्थाश्रयस्यैव भवति॥ ७–समस्यमानपदार्थापेक्षया भिन्नार्थाभिधायिकेत्यर्थः॥ ८–वृत्तेर्योऽर्थः तस्यावबोधकं वाक्यं विग्रह इत्यर्थः॥ ९–लोके प्रयोगार्ह एव लौकिकः॥ १०–लोके प्रयोगानर्ह एवालौकिकः॥ ११–मूलोक्तविग्रहे 'सह सुपा' इत्यनेन विभाषा समाससंज्ञायां समासत्वात् प्रातिपदिकत्वेन विभक्त्योर्लुकि 'भूतपूर्वे चरट्' इति निर्देशेन भूतशब्दस्य पूर्वनिपाते एकदेशविकृतन्यायेन प्रातिपदिकत्वात्सौ रुत्वादिकार्ये 'भूतपूर्वः' इति सिद्धम्॥ १२–विभाषाधिकाराभावेऽपि, अयं समासोऽनित्यः। अतएव इवशब्दस्य व्यत्ययेनापि प्रयोगे 'उब्दाहुरिव वामनः' इति कालिदासप्रयोगः संगच्छते॥

# अथाव्ययीभावः

**अव्ययीभावः २। १। ५॥**

अधिकारोऽयं प्राक् तत्पुरुषात्॥

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रति-शब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २। १। ६॥**

विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते सोऽव्ययीभावः[1]। प्रायेणाविग्रहो नित्यसमासः, प्रायेणास्वपदविग्रहो वा। विभक्तौ, हरि ङि अधि[2] इति स्थिते॥

**प्रथमानिर्दिष्टं[3] समास उपसर्जनम् १। २। ४३॥**

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्॥

**उपसर्जनं पूर्वम् २। २। ३०॥**

समासे उपसर्जनं प्राक् प्रयोज्यम्। इत्यधेः प्राक् प्रयोगः। सुपो लुक् एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः। अव्ययीभाव-श्चेत्यव्ययत्वात्सुपो लुक्। अधिहरि[4]॥

**अव्ययीभावश्च २। ४। १८॥**

---

१–ननु विग्रहेणैव समासार्थबोधनाद् अविग्रह इति कथनमसङ्गतमित्यरुचेराह प्रायेणास्वपदेत्यादि—न स्वेन पदेन विग्रहो यस्य सोऽस्वपदविग्रहः॥ २–अत्र सप्तम्यर्थस्यैव द्योतकोऽधिः। यद् अव्ययं यस्या विभक्तेरर्थस्य द्योतकं तद्विभक्त्यन्तस्यैव तेनाव्ययेन सह समासो भवतीति बोद्धव्यम्॥ ३–समाससंज्ञाविधायकशास्त्र-घटकप्रथमान्तपदजन्यबोधविषयोऽर्थः उपसर्जनसंज्ञः। तथा हि समाससंज्ञाविधायकं शास्त्रम् 'अव्ययं विभक्ति—' इत्यादिसूत्रं तद्घटकं प्रथमान्तं पदम् 'अव्ययम्' इति तज्जन्यबोधविषयः 'अधि' इति तस्योपसर्जनसंज्ञा॥ ४–'हरि ङि अधि' इत्यलौकिकविग्रहे 'अव्ययं विभक्ति—' इत्यादिना अव्ययीभावसमासे 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति उपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति अधेः पूर्वनिपाते 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वे 'सुपो धातु—' इत्यादिना सुपो लुकि एकदेशविकृतस्यानन्यत्वात् प्रातिपदिकनिमित्तकस्वाद्युत्पत्तौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सुपो लुकि 'अधिहरि' इति सिद्ध्यति॥

अयं नपुंसकं स्यात्॥

**नाव्ययीभावादतोऽम्त्वपञ्चम्याः २। ४। ८३॥**

अदन्तादव्ययीभावात्सुपो न लुक्, तस्य पञ्चमीं विना अमादेशश्च स्यात्॥ गाः पातीति गोपास्तस्मिन्नित्यधिगोपम्॥

**तृतीयासप्तम्योर्बहुलम् २। ४। ८४॥**

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात्। अधिगोपम्, अधिगोपेन, अधिगोपे वा। [1]कृष्णस्य समीपम् उपकृष्णम्। [2]मद्राणां समृद्धिः सुमद्रम्। यवनानां [3]व्यृद्धिर्दुर्यवनम्। [4]मक्षिकाणामभावो निर्मक्षिकम्। [5]हिमस्यात्ययोऽतिहिमम्। [6]निद्रा संप्रति न युज्यत इत्यतिनिद्रम्। [7]हरिशब्दस्य प्रकाश इतिहरि। [8]विष्णोः पश्चादनुविष्णु। योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः। [9]रूपस्य योग्यमनुरूपम्। [10]अर्थमर्थं प्रति प्रत्यर्थम्। [11]शक्तिमनतिक्रम्य यथाशक्ति॥

**अव्ययीभावे चाकाले ६। ३। ८१॥**

सहस्य सः स्यादव्ययीभावे न तु काले। [12]हरेः सादृश्यं सहरि। [13]ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्। [14]चक्रेणयुगपत् सचक्रम्। [15]सदृशः सख्या ससखि। [16]क्षत्राणां संपत्तिः सक्षत्रम्। [17]तृणमप्यपरित्यज्य सतृणमत्ति। [18]अग्निग्रन्थपर्यन्तमधीते साग्नि॥

**नदीभिश्च २। १। २०॥**

नदीभिः सह संख्या समस्यते। (समाहारे चायमिष्यते)। [19]पञ्चगङ्गम्। [20]द्वियमुनम्॥

**तद्धिताः ४। १। ७६॥**

---

१–'कृष्णस्य समीपम्' इति लौकिकविग्रहः, 'कृष्ण ङस् उप' इत्यलौकिक-विग्रहः॥ २–अत्र 'मद्र आम् सु' इत्यलौकिकविग्रहः॥ ३–'यवन आम् दुर्'॥ ४–'मक्षिका आम् निर्'॥ ५–'हिम ङस् अति'॥ ६–'निद्रा ङस् अति'॥ ७–'हरि ङस् इति'॥ ८–'विष्णु ङस् अनु'॥ ९–'रूप ङस् अनु'॥ १०–'अर्थ अम् प्रति'॥ ११–'शक्ति ङस् यथा'॥ १२–'हरि टा सह'॥ १३–'ज्येष्ठ ङस् अनु'॥ १४–'चक्र टा सह'॥ १५–'सखि टा सह'॥ १६–'क्षत्र भिस् सह'॥ १७–'तृण टा सह'॥ १८–'अग्नि टा सह'॥ १९–'पञ्चानां गङ्गानां समाहारः' इति लौकिकः 'पञ्चन् जस् गङ्गा जस्' इत्यलौकिकः॥ २०–'द्वयोर्यमुनयोः समाहारः'॥

आपञ्चमसमासेरधिकारोऽयम्॥

**अव्ययीभावे शरत्प्रभृतिभ्यः ५। ४। १०७॥**[1]

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे। शरदः समीपमुपशरदम्।[2] प्रतिविपाशम्।[3] (जराया जरश्च।) उपजरसमित्यादि॥[4]

**अनश्च ५। ४। १०८॥**

अन्नन्तादव्ययीभावाट्टच् स्यात्॥

**नस्तद्धिते ६। ४। १४४॥**

नान्तस्य भस्य टेर्लोपस्तद्धिते। उपराजम्। अध्यात्मम्॥[5]

**नपुंसकादन्यतरस्याम् ५। ४। १०९॥**

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात्। उपचर्मम्। उपचर्म॥

**झयः ५। ४। १११॥**

झयन्तादव्ययीभावाट्टज्वा स्यात्। उपसमिधम्। उपसमित्॥

इत्यव्ययीभावः॥ २॥

☆☆☆☆

---

१–अत्र शरदादिनिर्देशः॥ २–अत्र समीपार्थे 'अव्ययं विभक्ति–' इत्यादिना समासः॥ ३–'विपाशं विपाशं प्रति' इति लौकिके 'विपाश् अम् प्रति' इत्यलौकिके विग्रहे 'अव्ययं विभक्ति–' इत्यादिना यथार्थेऽव्ययीभावः॥ ४–'जरायाः समीपम्' इति विग्रहः॥ ५–'आत्मनि अधि' इति लौकिके 'आत्मन् ङि अधि' इत्यलौकिके विग्रहे विभक्त्यर्थेऽव्ययीभावः॥

# अथ तत्पुरुषः

**तत्पुरुषः २। १। २२॥**

अधिकारोऽयं प्राग्बहुव्रीहेः॥

**द्विगुश्च २। १। २३॥**

द्विगुरपि तत्पुरुषसंज्ञकः स्यात्॥

**द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २। १। २४॥**

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः[1] सह वा समस्यते स च तत्पुरुषः। कृष्णं श्रितः कृष्णश्रित इत्यादि॥

**तृतीया तत्कृतार्थेन[2] गुणवचनेन २। १। ३०॥**

तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन[3] च सह वा प्राग्वत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति[4] किम्? अक्ष्णा काणः॥

**कर्तृकरणे कृता बहुलम् २। १। ३२॥**

कर्तरि करणे च तृतीया[5] कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः। (प०) कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्। नखनिर्भिन्नः॥

**चतुर्थी[6] तदर्थार्थबलिहितसुखरक्षितैः २। १। ३६॥**

चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्।

---

१-आदिपदेन दुःखातीतः, कूपपतितः, ग्रामगतः, तुहिनात्यस्तः (अत्यासोऽतिक्रमः), सुखप्राप्तः, दुःखापन्न इति ग्राह्याणि॥ २-तृतीयान्तपदम्, 'शङ्कुलया' इति तदर्थः शङ्कुलारूपकरणम्, तत्कृतो गुणः खण्डनक्रियारूपः, तद्वाचकं खण्डपदं तत्प्रकृतिकसुबन्तेन सह 'शङ्कुला टा' इति तृतीयान्तस्य समासः॥ ३-अर्थ्यत इति अर्थः प्रयोजनम्, 'धान्येन' इत्यत्र करणे तृतीया॥ ४-ननु एतत्सूत्रोदाहरणद्वये करण एव तृतीया तथा च 'कर्तृकरणे—' इत्यनेनैव सिद्धे समासे इदं सूत्रं व्यर्थमित्याशङ्कते— तत्कृतेति, 'गुणवचनेन चेत्तृतीयान्तस्य समासस्तर्हि तत्कृतेनैव' इति नियमार्थमिदमित्याशयेनाह—अक्ष्णेति॥ ५-ननु 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणम्' इति परिभाषया कृदन्ततदादेरेवात्र ग्रहणे निर्भिन्नशब्देन समासो न स्यादत आह—कृद्ग्रहण इति॥ ६-चतुर्थ्यन्तवाच्याय यूपाय यद् दार्वादि तद्वाचिना सह चतुर्थ्यन्तं समस्यत इत्यर्थः॥

यूपाय दारु यूपदारु। (तदर्थेन प्रकृतिविकृतिभाव एवेष्टः)[1]। तेनेह न—रन्धनाय स्थाली। (अर्थेन नित्यसमासो विशेष्यलिङ्गता[2] चेति वक्तव्यम्)। द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्॥

**पञ्चमी भयेन २। १। ३७॥**

चोराद्भयं चोरभयम्॥

**स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन[3] २। १। ३९॥**

**पञ्चम्याः स्तोकादिभ्यः ६। ३। २॥**

अलुगुत्तरपदे। स्तोकान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। कृच्छ्रादागतः॥

**षष्ठी २। २। ८॥**

सुबन्तेन प्राग्वत्। राजपुरुषः॥

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २। २। १॥**

अवयविना[4] सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी। [5]षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकाधिकरणे किम्? पूर्वश्छात्राणाम्॥

**अर्धं नपुंसकम् २। २। २॥**

समांशवाच्यर्धशब्दो नित्यं क्लीबे स प्राग्वत्। अर्धं पिप्पल्याः [6]अर्धपिप्पली॥

---

१-प्रकृतिः समवायिकारणं विकृतिः कार्यमेवञ्च यत्र समवायिकारणकार्यभावस्तत्र समासो यथा 'घटाय मृत्तिका घटमृत्तिका, पटाय तन्तवः पटतन्तवः, शङ्कवे दारु शङ्कुदारु' इत्यादि। न तु 'रन्धनाय स्थाली' इत्यादौ॥ २-'परवल्लिङ्गम्—' इति नियमतः प्राप्तपुंस्त्वस्य बाधकमिदम्, विशेष्यस्य यादृशं लिङ्गं तादृशमेव समस्तपदस्येत्यर्थः॥ ३-स्तोकाद्यर्थप्रकृतिकं कृच्छ्रप्रकृतिकं च पञ्चम्यन्तं क्तान्तेन सुबन्तेन सह समस्यते॥ ४-एकदेशशब्दश्चावयववाचीति भावः॥ ५-षष्ठीसमासे सति 'षष्ठी' इति प्रथमान्तत्वेन निर्देशात् षष्ठ्यन्तकायशब्दस्य पूर्वनिपाते 'कायपूर्वः' इति स्यात्, ततश्च पूर्वादिशब्दानां पूर्वनिपातनियमार्थमेवैतत् सूत्रमिति बोध्यम्॥ ६-अत्र पिप्पलीशब्दे 'एकविभक्तावषष्ठ्यन्तवचनम्' इति वचनेन अनुपसर्जनत्वात् 'गोस्त्रियोः—' इति ह्रस्वो न॥

**सप्तमी शौण्डैः[1] २। १। ४०॥**

सप्तम्यन्तं शौण्डादिभिः प्राग्वत्। अक्षेषु शौण्डः अक्षशौण्ड इत्यादि। द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः॥

**दिक्संख्ये संज्ञायाम् २। १। ५०॥[2]**

संज्ञायामेवेति[3] नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः।

तेनेह न—उत्तरा वृक्षाः। पञ्च ब्राह्मणाः॥

**तद्धितार्थोत्तरपदसमाहारे च २। १। ५१॥**

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये[4] प्राग्वत्। पूर्वस्यां शालायां भवः[5]— पूर्वा शाला इति समासे जाते (सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः[6]) ॥

**दिक्पूर्वपदादसंज्ञायां ञः ४। २। १०७॥**

अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम्॥

**तद्धितेष्वचामादेः ७। २। ११७॥**

ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात्। यस्येति च। पौर्वशालः[7]॥ पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ। (द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्) ॥

**गोरतद्धितलुकि ५। ४। ९२॥**

---

१–शौण्डादयो यथा— शौण्ड धूर्त, कितव, व्याड, प्रवीण, संवीत, अन्तर, अधि, पटु, पण्डित, कुशल, चपल, निपुण इति॥ २–इषुकामशमी ग्रामविशेषः। पूर्वेषुकामशमी संज्ञा॥ ३–'संज्ञायामेव' इति नियमेन॥ ४–दिक्संख्याप्रकृतिकं सुबन्तं सुबन्तेन समस्यते इत्यर्थः॥ ५–भव इति 'तत्र भवः' तद्धितप्रकरणे 'भवः' इत्यर्थनिर्देशात्॥ ६–पुँल्लिङ्गे यादृशं रूपं तत्प्राप्तिः, अर्थात् स्त्रीप्रत्ययनिवृत्तिः; तन्निमित्तस्य स्त्रीत्वस्य निवृत्तेरिति भावः॥ ७–'पूर्वस्यां शालायां भवः' इति लौकिकविग्रहे 'पूर्वा ङि शाला ङि' इत्यलौकिकविग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे समासत्वात्प्रातिपदिकत्त्वेन सुपो लुकि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इत्यनेन पूर्वपदस्य पुंवद्भावे पूर्वशाला' शब्दान् ङौ 'दिक्पूर्वपदादसंज्ञायां ञः' इति ञ प्रत्ययेऽनुबन्धलोपे तद्धितान्तत्वेन प्रातिपदिकत्वान् ङेर्लुकि 'तद्धितेष्वचामादेः' इति आद्यचो वृद्धौ स्वादिकार्ये 'पौर्वशालः' इति सिद्धम्॥

गोऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि॥ पञ्चगवधनः[1]॥

**तत्पुरुषः समानाधिकरणः कर्मधारयः १। २। ४२॥**

**संख्यापूर्वो द्विगुः २। १। ५२॥**

तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात्॥

**द्विगुरेकवचनम् २। ४। १॥**

द्विग्वर्थः समाहार एकवत्स्यात्॥

**स नपुंसकम् २। ४। १७॥**

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। पञ्चानां गवां समाहारः पञ्चगवम्॥

**विशेषणं विशेष्येण बहुलम् २। १। ५७॥**

भेदकं[2] भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात्[3]क्वचिन्नित्यम्—कृष्णसर्पः। क्वचिन्न—रामो जामदग्न्यः॥

**उपमानानि[4] सामान्यवचनैः २। १। ५५॥**

घन इव श्यामो घनश्यामः (शाकपार्थिवादीनां सिद्धये उत्तरे[5]-पदलोपस्योपसंख्यानम्)। शाकप्रियः पार्थिवः शाकपार्थिवः[6]। देवपूजको ब्राह्मणो देवब्राह्मणः॥

---

१–'पञ्चन् जस् गो जस् धन सु' इत्यलौकिकविग्रहे पूर्वम् 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासः, तदनु 'तद्धितार्थोत्तरपदसमाहारे च' इति तत्पुरुषसमासे प्रातिपदिकत्वात् 'सुपो धातु—' इति सुपो लुकि, अन्तर्वर्तिविभक्तिमाश्रित्य पदत्वान्नलोपे 'पञ्च गो धन' इत्यवस्थायां गोशब्दात् 'गोरतद्धितलुकि' इति टचि, अनुबन्धलोपे, अवादेशे 'पञ्चगवधन' इत्यतः प्रातिपदिकत्वात्सौ विभक्तौ,अनुबन्धलोपे, रुत्वे विसर्गे च 'पञ्चगवधनः' इति सिद्धम्॥

२– भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम्।
प्रधानं तु विशेष्यं स्यादप्रधानं विशेषणम्॥
पदार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम्।
विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव समर्पणात्॥

३– क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥

४–उपमानवाचकस्य पूर्वनिपातार्थं सूत्रम्॥ ५–पूर्वपदे यद् उत्तरपदं तस्य लोपो वक्तव्य इत्यर्थः॥ ६–शाकप्रियशब्द उत्तरपदभूतस्य प्रियपदस्य लोपे 'शाकपार्थिवः' इति सिध्यति, एवं पूजकशब्दलोपेन 'देवब्राह्मणः' इति सिध्यति॥

**नञ् २। २। ६॥**

नञ् सुपा सह समस्यते॥

**नलोपो नञः ६। ३। ७३॥**

नञो नस्य लोप उत्तरपदे। न ब्राह्मणः अब्राह्मणः॥

**तस्मान्नुडचि ६। ३। ७४॥**

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात्। अनश्वः। नैकधेत्यादौ[1] तु नशब्देन सह[2] सुप्सुपेति समासः॥

**कुगतिप्रादयः २। २। १८॥**

एते समर्थेन नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपुरुषः॥

**ऊर्यादिच्विडाचश्च १। ४। ६१॥**

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः।

ऊरीकृत्य[3]। शुक्लीकृत्य। पटपटाकृत्य। सुपुरुषः॥ (प्रादयो गताद्यर्थे प्रथमया।) प्रगत आचार्यः प्राचार्यः। (अत्यादयः क्रान्ताद्यर्थे द्वितीयया।) अतिक्रान्तो मालामिति विग्रहे—

**एकविभक्ति चापूर्वनिपाते १। २। ४४॥**

विग्रहे[4] यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः॥

---

१–नञ एकधाशब्देन समासे नञो नकारलोपे एकधाशब्दस्य नुडागमे 'अनश्वः' इतिवत् 'अनेकधा' इति स्यादित्याशङ्कां परिहरति नैकधेति॥ २–यद्यपि गतिपदेन प्रादीनामेव ग्रहणं भवति, तथापि क्रियायोग एव तेषां गतिसंज्ञाविधानेन यत्र क्रियायोगाभावस्तत्रापि 'सुपुरुषः' इत्यादौ समासविधानार्थं प्रादिग्रहणम्॥ ३–'ऊरीकृत्य' इत्यस्य स्वीकृत्य, मनसि कृत्वा इति चार्थः। ऊरीशुक्लीपटपटाशब्दानाम् 'कृत्वा' इति क्त्वान्तेन योगे 'ऊर्यादि—' इति सूत्रेण गतिसंज्ञायां 'कुगति—' इति सूत्रेण समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति क्त्वाशब्दस्य ल्यबादेशे 'ह्रस्वस्य पिति—' इति तुगागमे स्थानिवद्भावेन क्त्वान्तत्वात् 'क्त्वातोसुन्—' इत्यव्ययत्वे 'अव्ययादाप्सुपः' इति समासाज्जातस्य सुपो लुकि एषां साधुत्वम्॥ ४–विग्रहवाक्यघटकं यत्किञ्चिदनियतविभक्तिकपदापेक्षया तद्वाक्यघटकं यन्नियतविभक्तिकं पदं तदुपसर्जनसंज्ञं स्यात्। अत्र विग्रहवाक्ये अनियतविभक्तिकम् 'अति' पदम् अतिक्रान्तमतिक्रान्तेनेत्यादिविग्रहात् तदपेक्षया द्वितीयान्तमालाशब्दस्य नियतविभक्तिकत्वम्, तस्योपसर्जनसंज्ञा॥

**गोस्त्रियोरुपसर्जनस्य १। २। ४८॥**

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। अतिमालः। (अवादयः क्रुष्टाद्यर्थे तृतीयया।) अवक्रुष्टः कोकिलया-अवकोकिलः। (पर्यादयो ग्लानाद्यर्थे चतुर्थ्या।) परिग्लानोऽध्ययनाय पर्यध्ययनः। (निरादयः क्रान्ताद्यर्थे पञ्चम्या।) निष्क्रान्तः कौशाम्ब्याः[1]—निष्कौशाम्बिः॥

**तत्रोपपदं सप्तमीस्थम् ३। १। ९२॥**

सप्तम्यन्ते[2] पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्॥

**उपपदमतिङ् २। २। १९॥**

उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भं करोतीति कुम्भकारः। अतिङ् किम्? मा भवान् भूत्। माङिलुङिति सप्तमीनिर्देशान्माङुपपदम्। (प०) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः। व्याघ्री[3]। अश्वक्रीती[4]। कच्छपीत्यादि[5]॥

**तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ५। ४। ८६॥**

संख्याव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्[6]॥ निर्गतमङ्गुलिभ्यो निरङ्गुलम्॥

---

१-कौशाम्बी नाम नगरीविशेषः॥ २-सप्तम्यन्तं पदम् 'कर्मण्यण्' इत्यादौ 'कर्मणि' इत्यादि पदं तत्र वाच्यत्वेन स्थितः कुम्भादिरूपोऽर्थः, 'कुम्भं करोति' इत्यादौ कुम्भादेः कर्मसंज्ञाविधानात्; तद्वाचकं पदम् 'कुम्भम्' इत्यादि द्वितीयान्तं तस्योपपदसंज्ञा॥ ३-'व्याजिघ्रति' इति विग्रहे 'आतश्चोपसर्गे' इति कप्रत्यये आङो 'घ्र' शब्देन वेः 'आघ्र' शब्देन च 'गतिकारक—' इति परिभाषासहकारेण सुबुत्पत्तेः प्राग्गतिसमासे जातिवाचकत्वात् 'जातेरस्त्रीविषयात्—' इत्यादिना ङीष् सुबुत्पत्त्यनन्तरं समासे तु सुपः प्राक् टापि अदन्तत्वाभावान् ङीष् न स्यात्॥ ४-'अश्वेन क्रीता' इति विग्रहे 'कर्तृकरणे कृता—' इति सूत्रेण निर्दिष्टपरिभाषया सुबुत्पत्तेः प्राक्समासे 'क्रीतात्करणपूर्वात्' इति ङीषि सिद्धम्। सुबुत्पत्त्यनन्तरं समासे तु टाप्यदन्तत्वाभावादत्रापि ङीष् न स्यात्॥ ५-'कच्छेन पिबति' इति विग्रहे 'सुपि स्थः' इत्यत्र 'सुपि' इति विभक्तयोगेन कप्रत्यये 'उपपदमतिङ्' इति समासे शेषकार्ये च जाते जातिलक्षणो ङीष्। अत्रापि परिभाषाविरहे पूर्वं टापि सति ङीष् न स्यादिति बोध्यम्॥ ६-अत्र 'तद्धितार्थ—' इति समासे सुपो लुकि 'तत्पुरुषस्य' इत्यचि यथाप्राप्तकार्ये एतत् सिद्धम्॥

**अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ५। ४। ८७॥**

एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः। [१]अहर्ग्रहणं द्वन्द्वार्थम्॥

**रात्राह्नाहाः पुंसि २। ४। २९॥**

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अहश्च रात्रिश्चाहोरात्रः। [२]सर्वरात्रः। संख्यातरात्रः। (संख्यापूर्वं रात्रं क्लीबम्)। [३]द्विरात्रम्। त्रिरात्रम्॥

**राजाहःसखिभ्यष्टच् ५। ४। ९१॥**

एतदन्तात्तत्पुरुषाट्टच् स्यात्। परमराजः॥

**आन्महतः समानाधिकरणजातीययोः ६। ३। ४६॥**

महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे। महाराजः। प्रकारवचने जातीयर्। महाप्रकारो महाजातीयः॥

**द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ६। ३। ४७॥**

आत्स्यात्। द्वौ च दश च [५]द्वादश। अष्टाविंशतिः॥

**[६]त्रेस्त्रयः ६। ३। ४८॥**

त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्॥

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २। ४। २६॥**

एतयोः परपदस्येव लिङ्गं स्यात्। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। अर्धपिप्पली। (द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु [७]प्रतिषेधो वाच्यः।) पञ्चसु कपालेषु संस्कृतः [८]पञ्चकपालः पुरोडाशः॥

**प्राप्तापन्ने च द्वितीयया २। २। ४॥**

समस्येते। अकारश्चानयोरन्तादेशः। प्राप्तो जीविकां प्राप्तजीविकः।

---

१-'अहन्' शब्दात्परस्य रात्रिशब्दस्य द्वन्द्व एव संभवादिति भावः॥ २-'सर्वा चासौ रात्रिश्च, संख्याता चासौ रात्रिश्च' इति विग्रहे विशेषणसमासः॥ ३-'द्विरात्रम्' इत्यादिषु 'तद्धितार्थ—' इति समाहारे द्विगुः॥ ४-बहुव्रीहौ तु द्वित्राः, अशीतौ परस्यां द्व्यशीतिरित्यादौ न॥ ५-'द्व्यधिका दश' इत्युत्तरपदलोपो वा॥ ६-सकारान्तोऽयमादेशः। अशीतौ परस्यां तु त्र्यशीतिरित्येव॥ ७-प्रतिषेध इति, परवल्लिङ्गस्येति शेषः॥ ८-अत्र 'तद्धितार्थ—' इति समासः, 'परवल्लिङ्गम्—' इति क्लीबत्वं प्राप्तं निषिध्य तद्धितप्रत्ययार्थपुरोडाशानुरोधेन पुंस्त्वम्॥

आपन्नजीविकः। अलं कुमार्यै—अलंकुमारिः। अत[1] एव ज्ञापकात्समासः। निष्कौशाम्बिः॥

**अर्धर्चाः पुंसि च २। ४। ३१॥**

अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः। अर्धर्चः। अर्धर्चम्[2]। एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः। सामान्ये[3] नपुंसकम्। मृदु पचति। प्रातः कमनीयम्॥

इति तत्पुरुषः॥ ३॥

# अथ बहुव्रीहिः

**शेषो बहुव्रीहिः २। २। २३॥**

अधिकारोऽयं प्राग्द्वन्द्वात्॥

**अनेकमन्यपदार्थे[4] २। २। २४॥**

अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः॥

**सप्तमीविशेषणे बहुव्रीहौ २। २। ३५॥**

सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात्। अत[5] एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः॥

---

१-अलंपूर्वसमासविधेरनुपलम्भादाह—अत एवेति, अलंपूर्वस्य परवल्लिङ्गता-प्रतिषेधवचनादित्यर्थः; वस्तुतस्तु 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति समासे, 'एकविभक्ति—' इति उपसर्जनत्वे 'गोस्त्रियोः—' इति ह्रस्वः। एवमेव 'निष्कौशाम्बिः' इत्यत्र 'निरादयः—' इति समासः, उक्तवार्तिकेन परवल्लिङ्गतानिषेधश्च॥ २-'ऋचोऽर्धम्' इति विग्रहे 'अर्धं नपुंसकम्' इत्येकदेशिसमासे 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तेऽप्रत्यये विभक्तिकार्ये इदं सिद्धम्॥ ३-यत्र विशेषरूपेण लिङ्गविशेषस्याभानं तत्सामान्यम्॥ ४-लिङ्गविशेषस्याविवक्षायां नपुंसकमेव प्रयोक्तव्यम्॥ ५-'कण्ठे' इत्यस्य सप्तम्यन्तत्वेनानेकप्रथमान्तत्वाभावात्समासाप्राप्तावाह—अत एव ज्ञापकादिति, अयं भावः—प्रथमान्तानामेव समासे सप्तम्यन्तालाभाद् व्यर्थमेव सप्तमीग्रहणं स्यादिति। इदमत्र तत्त्वम्, अनेकेषां प्रथमान्तानां द्वितीयादिसप्तम्यन्तार्थे॥ बहुव्रीहिः, तत्र द्वितीयादिपञ्चम्यन्तार्थे

**हलदन्तात्सप्तम्याः संज्ञायाम् ६ । ३ । ९ ॥**

हलन्तादन्ताच्च सप्तम्या अलुक् । कण्ठेकालः[१] । प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । ऊढरथो[२]ऽनड्वान् । उपहृतपशू[३] रुद्रः । उद्धृतौदना[४] स्थाली । पीताम्बरो[५] हरिः । वीरपुरुषको[६] ग्रामः । (प्रादिभ्यो[७] धातुजस्य वाच्यो वा चोत्तरपदलोपः ।) प्रपतितपर्णः, प्रपर्णः । (नञो[८]ऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः ।) अविद्यमानपुत्रः, अपुत्रः ॥

**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६ । ३ । ३४ ॥**

उक्त पुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिः । निपातनात्पञ्चम्या[९]

---

यत्र बहुव्रीहिस्तत्र कर्तृकर्मप्रत्ययान्तसुबन्तेन सह समासः । उक्तोदाहरणेषु 'प्राप्तोदकः' इत्यत्र कर्तृवाचकं सुबन्तम्, तत्र प्राप्तपदे 'गत्यर्थाकर्म—' इति कर्तरि क्तप्रत्ययविधानात् । 'ऊढरथः' इत्यादिषु त्रिषु कर्मप्रत्ययान्ता ऊढादयः । षष्ठीसप्तम्यन्तार्थे बहुव्रीहौ न स नियमः । किं तु मतुबर्थे समासः । तथा च वार्तिकम् 'मत्वर्थे बहुव्रीहिः कर्मकर्तृवचनेनाप्रथमायाः' इति । तत्र मत्वर्थः षष्ठ्यर्थसप्तम्यर्थरूपः । अत्र सर्वत्र कर्माद्यर्थे बहुव्रीहौ तेषां समासेनाभिधानादनभिहितकर्माद्यभावेन न द्वितीयादिः किन्तु प्रथमैव ॥

१–'कण्ठे कालो यस्य सः' इति विग्रहः, नीलकण्ठो महादेव इत्यर्थः ॥ २–'ऊढो रथो येन सः' ॥ ३–'उपहृतः पशुः यस्मै सः' ॥ ४–'उद्धृतम् ओदनं यस्याः सा' ॥ ५–'पीतम् अम्बरं यस्य सः' ॥ ६–'वीराः पुरुषा यस्मिन् सः' ॥ ७–प्रादिभ्यः परं यद् धातुजं तदन्तस्य पदान्तरेण सह बहुव्रीहिः पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य लोपश्चेत्यर्थः । 'प्रकर्षेण पतितानि प्रपतितानि तादृशानि पर्णानि यस्य सः' इति विग्रहे वार्तिकेन समासे पतितशब्दस्य वैकल्पिकलोपे च 'प्रपर्णः' 'प्रपतितपर्णः' इति रूपद्वयं सिद्धम् ॥ ८–नञः परं यदस्त्यर्थवाचि पदं तदन्तस्य पदान्तरेण बहुव्रीहिः अस्त्यर्थवाचिनां तु वा लोपः । न विद्यमानः अविद्यमानस्तादृशः पुत्रो यस्य सः अपुत्रः अविद्यमानपुत्रः । यद्यपि बहुव्रीहिसमासः 'अनेकमन्यपदार्थे' इति सूत्रेण सिद्धस्तथापि वैकल्पिकोत्तरपदलोपार्थं वार्तिकद्वयम् ॥ ९–'भाषितपुंस्कादनूङ्' इत्यत्र पञ्चमीश्रवणषष्ठ्यश्रवणयोः कारणमाह—निपातनादिति ॥ 'भाषितः पुमान् यस्मिन्नर्थे स भाषितपुंस्कः सोऽस्त्यस्य तद्भाषितपुंस्कम्' इति विग्रहफलमाह—तुल्ये प्रवृत्तिनिमित्त इति ॥

अलुक् षष्ठ्याश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्त पुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः। गोस्त्रियोरिति ह्रस्वः चित्रगुः[1]। रूपवद्भार्यः। अनूङ् किम्? वामोरूभार्यः॥ पूरण्यां तु—

**अप्पूरणीप्रमाण्योः ५। ४। ११६॥**

पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा[2] रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। अप्रियादिषु किम्? कल्याणीप्रिय इत्यादि॥

**बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५। ४। ११३॥**

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात्। दीर्घसक्थः। जलजाक्षी। स्वाङ्गात्किम्? दीर्घसक्थि शकटम्। स्थूलाक्षा वेणुयष्टिः। अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच्॥

**द्वित्रिभ्यां ष मूर्ध्नः ५। ४। ११५॥**

आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ। द्विमूर्धः। त्रिमूर्धः॥

**अन्तर्बहिर्भ्यां च लोम्नः ५। ४। ११७॥**

आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ। अन्तर्लोमः। बहिर्लोमः॥

**पादस्य लोपोऽहस्त्यादिभ्यः ५। ४। १३८॥**

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ। व्याघ्रस्येव पादावस्य व्याघ्रपात्[3]। अहस्त्यादिभ्यः किम्? हस्तिपादः। कुसूलपादः॥

---

१-'चित्रा गौर्यस्य' इति विग्रहे बहुव्रीहिसमासे चित्राशब्दे पुंवद्भावेन टापो निवृत्तिः, गोशब्दस्य 'गोस्त्रियोः—' इति ह्रस्वेनौकारस्योकारः। एवमेव 'रूपवद्भार्यः' इत्यत्र पुंवद्भावेन रूपवतीशब्दे दृष्टस्य ङीपो निवृत्तिः, भार्याशब्दवर्तिन आकारस्य ह्रस्वोऽकार इति बोध्यम्॥ २-मूलोक्तविग्रहे षष्ठ्यर्थे बहुव्रीहौ विभक्तिलुकि 'अपूरणी' इति निषेधेन पुंवद्भावाभावे समुदायात् 'अप्पूरणी—' इत्यप् प्रत्यये 'यस्येति—' इति लोपे टापि जसि रूपमिदम्॥ ३-'व्याघ्रः पादौ अस्य' इति विग्रहः। यद्यपि व्याघ्रो न हि कस्यचित्पादो भवति इति व्याघ्रशब्दस्य व्याघ्रपादे लक्षणायामपि तदीयः पादो नान्यस्येत्येवमसंभवस्तथापि व्याघ्रपादसदृशे लक्षणायाः पर्यवसानात् फलितार्थविग्रहः 'व्याघ्रस्य पादाविव पादावस्य' इति॥

**संख्यासुपूर्वस्य ५। ४। १४०॥**

पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ। द्विपात्[१]। सुपात्॥

**उद्विभ्यां काकुदस्य ५। ४। १४८॥**

लोपः स्यात्। उत्काकुत्[२]। विकाकुत्॥

**पूर्णाद्विभाषा ५। ४। १४९॥**

पूर्णकाकुत्। पूर्णकाकुदः॥

**सुहृद्दुर्हृदौ मित्रामित्रयोः ५। ४। १५०॥**

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृन्मित्रम्[३]। दुर्हृदमित्रः॥

**उरःप्रभृतिभ्यः कप् ५। ४। १५१॥**

**सोऽपदादौ ८। ३। ३८॥**

पाशकल्पककाम्येषु विसर्गस्य सः॥

**कस्कादिषु च ८। ३। ४८।**

एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः। इति सः। व्यूढोरस्कः[४]॥

**इणः षः ८। ३। ३९॥**

इण उत्तरस्य विसर्गस्य षः पाशकल्पककाम्येषु परेषु। प्रियसर्पिष्कः[५]॥

**निष्ठा २। २। ३६॥**

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। युक्तयोगः[६]॥

**शेषाद्विभाषा ५। ४। १५४॥**

अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा। महायशस्कः[७], महायशाः॥

इति बहुव्रीहिः॥ ४ ॥

---

१-'द्वौ पादौ यस्य सः' 'शोभनौ पादौ यस्य सः' इति विग्रहः॥ २-'उद्गतं काकुदं (तालु) यस्य सः' इति लौकिको विग्रहः। अलौकिकस्तु 'उत् सु काकुद सु' इति। एवं 'विकाकुत्' 'पूर्णकाकुत्' इत्यादि॥ ३-'सुष्ठु शोभनं हृदयं यस्य सः' इति विग्रहः। एवं दुर्हृत्॥ ४-'व्यूढमुरो यस्य सः'॥ ५-'प्रियं सर्पिः (घृतम्) यस्य सः'॥ ६-'युक्तो योगो येन सः'॥ ७-'महद् यशो यस्य सः'॥

# अथ द्वन्द्वः

**चार्थे द्वन्द्वः २। २। २९॥**

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्र 'ईश्वरं गुरुं च भजस्व' इति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः[1] समुच्चयः। 'भिक्षामट गां चानय' इत्यन्यतरस्यानुषङ्गिकत्वे[2]-नान्वयोऽन्वाचयः अनयोरसामर्थ्यात्समासो न।[3] 'धवखदिरौ छिन्धि' इति मिलितानामन्वय[4] इतरेतरयोगः। 'संज्ञापरिभाषम्' इति समूहः[5] समाहारः॥

**राजदन्तादिषु परम् २। २। ३१॥**

एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजानो राजदन्ताः[6]। (धर्मादिष्वनियमः।) अर्थधर्मौ। धर्मार्थावित्यादि॥

**द्वन्द्वे घि २। २। ३२॥**

द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ॥

**अजाद्यदन्तम् २। २। ३३॥**

द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ॥

**अल्पाच्तरम् २। २। ३४॥**

शिवकेशवौ॥

---

१-एकस्य क्रियायामन्वयोत्तरमपरस्यावृत्त्या तत्रान्वयेन निरपेक्षत्वम्। 'धवखदिरौ छिन्धि' इत्यादौ त्वेकदैव धवखदिरयोश्छेदनक्रियायामन्वय इति न निरपेक्षत्वम्॥ २-उभयोर्मध्ये यत्र एकस्य अनुद्देश्यत्वरूपमानुषङ्गिकत्वम्, तेन रूपेणेतरत्र क्रियादावन्वयः। तदपेक्षयान्यस्य प्राधान्यं च तत्सम्बन्धिक्रियाया अवश्यकर्तव्यत्वरूपम्॥ ३-अनेक सुबन्तानां चार्थे वृत्त्यभावेनैकार्थीभावरूपसामर्थ्याभावादित्यर्थः॥ ४-मिलितानां परस्परापेक्षाणाम् उद्भूतावयवभेदसमूहरूपाणामेकधर्मावच्छिन्नेऽन्वय इतरेतरयोग इत्यर्थः॥ ५-समूह इति, तिरोहितावयवगतसंख्यः समूह इत्यर्थः। अत्रेदं तत्त्वम् इतरेतरयोगद्वन्द्वे समस्यमानपदार्थगतसंख्यां समुदाये समारोप्य द्विवचनान्तबहुवचनान्त प्रयोगः। समाहारद्वन्द्वे तु समस्यमानपदार्थगतसंख्या तत्समुदाये नारोप्यते किन्तु तत्समुदाय एकत्वबुद्ध्या एकवचनान्तप्रयोगः। ननु समाहारद्विगुद्वन्द्वयोः को भेद इति चेदुच्यते समाहारद्विगौ तदीयलौकिकालौकिकविग्रहयोः षष्ठ्यन्तपदप्रयोगः। यथा 'पञ्चानां गवां समाहारः' इत्यादि। समाहारद्वन्द्वे तु प्रथमान्तानामेव पदानां प्रयोगः, तदीयविग्रहवाक्यस्य 'संज्ञा च परिभाषा च' इत्यनयोः समाहार इत्येवमनुभवात्। 'संज्ञायाश्च परिभाषायाश्च' इत्येवं न द्वन्द्वस्य विग्रहः। प्रथमान्तानामेव द्वन्द्व इति सिद्धान्तात्॥ ६-'राजदन्तास्तु चत्वारो दन्तानामुपरि स्थिताः'॥

**पिता मात्रा १। २। ७०॥**

मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ, मातापितरौ वा॥

**द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २। ४। २॥**

एषां द्वन्द्व एकवत्। पाणिपादम्। मार्दङ्गिकवैणविकम्[1]। रथिकाश्वारोहम्॥

**द्वन्द्वाच्चुदषहान्तात्समाहारे ५। ४। १०६॥**

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक् च त्वक् च वाक्त्वचम्। त्वक्स्रजम्[2]। शमीदृषदम्[3]। वाक्त्विषम्[4]। छत्रोपानहम्[5]। समाहारे किम्? प्रावृट्शरदौ॥

इति द्वन्द्वः॥ ५॥

*****

# अथ समासान्ताः

**ऋक्पूरब्धूः पथामानक्षे ५। ४। ७४॥**

अ अनक्षे इतिच्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवोऽक्षे या धूस्तदन्तस्य तु न। अर्धर्चः[6]। विष्णुपुरम्[7]। विमलापं सरः[8]। राजधुरा[9]। अक्षे तु अक्षधूः[10]। दृढधूरक्षः[11]। सखिपथः। रम्यपथो देशः॥

**अक्ष्णोऽदर्शनात् ५। ४। ७६॥**

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव गवाक्षः[12]॥

**उपसर्गादध्वनः ५। ४। ८५॥**

प्रगतोऽध्वानं प्राध्वो[13] रथः॥

---

१-'मृदङ्गवादनं वेणुवादनं च शिल्पमस्य' इत्यर्थे 'तदस्य शिल्पम्' इति ठक्॥ २-त्वक् स्पर्शग्राहकमिन्द्रियम्, स्रग् माल्यम्॥ ३-अरणीसंज्ञकं यज्ञकाष्ठं शमी, दृषत् प्रस्तरम्॥ ४-वाग् वाणी, त्विट् प्रभा॥ ५-'छत्रं च उपानहौ चेत्येषां समाहारः' इति विग्रहः॥ ६-अत्र षष्ठीतत्पुरुषः, 'परवल्लिङ्गम्'— इति स्त्रीत्वं तु न लोके क्लीबप्रयोगात्॥ ७-'विमला आपो (जलानि) यत्र तत्'। सरस्तडागः॥ ८-राजभारः॥ ९-अक्षश्चक्रं तस्य धूरग्रभागः॥ १०-रथनाभिच्छिद्रम्॥ ११-'सख्युः पन्थाः' इति विग्रहः॥ १२-वातायनम्॥ १३-'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः, 'प्रगतोऽध्वानम्' इति विग्रहः॥

**न पूजनात् ५। ४। ६९॥**

पूजनार्थात्परेभ्यः समासान्ता न स्युः। सुराजा[1]। अतिराजा॥

इति समासान्ताः॥

# अथ तद्धिताः, तत्रादौ साधारणप्रत्ययाः

**समर्थानां प्रथमाद्वा ४। १। ८२॥**

इदं पदत्रयमधिक्रियते[2] प्राग्दिश इति यावत्॥

**अश्वपत्यादिभ्यश्च ४। १। ८४॥**

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु[3]। अश्वपतेरपत्यादि आश्वपतम्[4]। गाणपतम्॥

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४। १। ८५॥**

दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात्। अणोऽपवादः। दितेरपत्यं दैत्यः। अदितेरादित्यस्य वा—॥

**हलो यमां यमि लोपः ८। ४। ६४॥**

हलः परस्य यमो लोपः स्याद् वा यमि। इति यलोपः। आदित्यः। प्राजापत्यः (देवाद्यञञौ)। दैव्यम्। दैवम्। (बहिषष्टिलोपो यञ्च)। बाह्यः। (ईकक्च)॥

---

१-'शोभनो राजा' सुराजा, 'अतिशयितो राजा' अतिराजा। 'कुगतिप्रादयः' इति समासः॥ २-सूत्रमधिक्रियत इति तु नोक्तं स्वार्थिकप्रकरणे वामात्रस्य सम्बन्धात्॥ ३-'तेन दीव्यति' इति सूत्रपठितदीव्यतिरूपार्थात्प्राग् यावन्तोऽपत्यादयोऽर्थास्तेष्वर्थेष्वित्यर्थः॥ ४-मूलोक्तलौकिकविग्रहे 'अश्वपति ङस्' इत्यस्मात् 'अश्वपत्यादिभ्यश्च' इति सूत्रेण अण् प्रत्ययेऽनुबन्धलोपे तद्धितान्तत्वात्प्रातिपदिकत्वेन सुपि तस्य लुकि, आदिवृद्धौ 'यस्येति च' इतीकारलोपे यथाप्राप्तकार्ये सिद्ध्यति रूपम्॥

**किति च ७। २। ११८॥**

किति तद्धिते चाचामादेरचो वृद्धिः स्यात्। बाहीकः[१]। (गोरजादिप्रसङ्गे[२] यत्।) गोरपत्यादि गव्यम्[३]॥

**उत्सादिभ्योऽञ् ४। १। ८६॥**

औत्सः[४]॥

इत्यपत्यादिविकारान्तार्थसाधारणप्रत्ययाः॥ १॥

****

# अथापत्याधिकारः

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४। १। ८७॥**

धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः। स्त्रैणः[५]। पौंस्नः[६]॥

**तस्यापत्यम्[७] ४। १। ९२॥**

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः॥

**ओर्गुणः ६। ४। १४६॥**

उवर्णान्तस्य भस्य गुणस्तद्धिते। उपगोरपत्यमौपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः॥

**अपत्यं पौत्रप्रभृति गोत्रम् ४। १। १६२॥**

अपत्यत्वेन विवक्षितं पौत्रादि[८] गोत्रसंज्ञं स्यात्॥

**एको गोत्रे ४। १। ९३॥**

---

१-बहिर्भवः॥ २-अजादिप्रत्ययप्रसङ्गे गोशब्दाद् यत्प्रत्ययः॥ ३-दधि॥ ४-उत्सो निर्झरस्तत्र भव औत्सः॥ ५-स्त्रिया अपत्यादिः, स्त्रैणशब्देन स्त्रीत्वं स्त्रीणां समुदायं स्त्रीजितं पुरुषं वा यथावसरं बुध्येत्॥ ६-पुंसोऽपत्यादिः॥ ७-'तस्य' इति षष्ठ्यन्तानुकरणं लुप्तषष्ठीकं पदम्। 'अपत्यम्' इति सप्तम्यर्थे प्रथमा। एवं 'तत्र जातः, तेन प्रोक्तम्, तस्मै हितम्, तत आगतः, तदधीते, सोऽस्य निवासः' इत्यादीनि सप्तम्यन्ताद्यनुकरणानि लुप्तपञ्चमीकानि। अर्थनिर्देशे सर्वत्र सप्तम्यर्थे सौत्री प्रथमा॥ ८-मूलपुरुषस्येति शेषः॥

गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यमौपगवः॥

**गर्गादिभ्यो यञ् ४। १। १०५॥**

गोत्रापत्ये। गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः॥

**यञञोश्च २। ४। ६४॥**

गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः॥

**जीवति[1] तु वंश्ये युवा ४। १। १६३॥**

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात्॥

**गोत्राद्यून्यस्त्रियाम् ४। १। ९४॥**

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा॥

**यञिञोश्च ४। १। १०१॥**

गोत्रे यौ यञिञौ तदन्तात्फक् स्यात्॥

**आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७। १। २॥**

प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय्,

---

१-इदमत्र तत्त्वम्, यद्यप्यपत्यशब्दः—

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे॥

इति कोशात् पुत्रपर्य्यायः; तथाप्यत्र 'अपत्यं पौत्रप्रभृति'— इति शास्त्रात् 'न पतन्ति पितरोऽनेन' इत्यर्थको यौगिको गृह्यते। तच्चापत्यं त्रिविधम्— 'अनन्तरापत्यम्' (पुत्रः) 'गोत्रापत्यम्' 'युवापत्यम्' च। तत्र मूलपुरुष; तृतीयादेः सन्तानस्य गोत्रसंज्ञा 'अपत्यं पौत्रप्रभृति; इत्यनेन। गोत्रापत्यप्रत्ययविवक्षायां मूलपुरुषसन्तानेषु एकत्र बहुत्र वा गोत्रत्वविवक्षायाम् एक एवापत्यप्रत्ययः 'एको गोत्रे' इति नियमात्। एवञ्च तृतीयापत्यविवक्षायां 'गर्गस्यापत्यापत्यम्' इति विग्रहे 'गर्गस्य गोत्रापत्यम्' 'गार्ग्यः' इत्येव रूपम् यस्य संतानस्य पितृपितामहाद्यन्यतमोऽस्ति तस्य युवसंज्ञा न गोत्रसंज्ञा। तत्र च गोत्रप्रत्ययान्तादेव प्रत्ययो न तु तदर्थे मूलप्रकृतेरनन्तरापत्यप्रत्ययान्ताद् युवापत्यप्रत्ययान्ताद्वा 'गोत्राद्यूनि'—इति नियमात्। गोत्राधिकारविहितप्रत्ययोऽनन्तरापत्ये न। एवं च अनन्तरापत्ये 'गार्गिः', गोत्रापत्ये 'गार्ग्यः', युवापत्ये 'गार्ग्यायणः' इति॥

एते स्युः[1]। गर्गस्य युवापत्यं गार्ग्यायणः। दाक्षायणः॥

**अत इञ् ४। १। ९५॥**

अपत्येऽर्थे। दाक्षिः॥

**बाह्वादिभ्यश्च ४। १। ९६॥**

बाहविः। औडुलोमिः[2]। (लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः।) उडुलोमाः। आकृतिगणोऽयम्॥

**अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४। १। १०४॥**

एभ्योऽञ् गोत्रे। ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे। बिदस्य गोत्रं बैदः। बैदौ। बिदाः[3]। पुत्रस्यापत्यं पौत्रः। पौत्रौ। पौत्राः[4]। एवं दौहित्रादयः॥

**शिवादिभ्योऽण् ४। १। ११२॥**

अपत्ये[5]। शैवः। गाङ्गः॥

**ऋष्यन्धकवृष्णिकुरुभ्यश्च[6] ४। १। ११४॥**

ऋषिभ्यः—वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः—श्वाफल्कः[7]। वृष्णिभ्यः—वासुदेवः[8]। कुरुभ्यः—नाकुलः[9]। साहदेवः॥

**मातुरुत्संख्यासंभद्रपूर्वायाः ४। १। ११५॥**

संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः[10]। षाण्मातुरः[11]। सांमातुरः। भाद्रमातुरः॥

**स्त्रीभ्यो ढक् ४। १। १२०॥**

---

१-अदन्तं यत्प्रातिपदिकं तस्मादिञ् स्यादपत्येऽर्थे॥ २-उडूनि नक्षत्राणि इव लोमानि यस्य स उडुलोमा तस्यापत्यं पुमानित्यर्थः॥ ३-बिदस्य ऋषित्वेन गोत्रेऽञ्, अतः 'यञञोश्च' इति बहुत्वे लुक्॥ ४-पुत्रस्यानृषित्वेन गोत्रेऽञोऽप्राप्त्यानन्तरापत्य एवाञो जातत्वेन न लुक्। अतएव तत्र 'गोत्रे' इत्यनुवर्तितमिति बोध्यम्॥ ५-यद्यपि 'गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारः' इति 'यूनि लुक्' इति सूत्रभाष्यतो लभ्यते, तथापि वृत्तावितो गोत्राधिकारनिवृत्तेरुक्तत्वादपत्यसामान्ये प्रत्ययमाह—अपत्य इति॥ ६-ऋषयो मन्त्रद्रष्टारः। अन्धकादयः सोमवंश्याः क्षत्रियाः॥ ७-अक्रूरः॥ ८-कृष्णः॥ ९-नकुलस्य (माद्रीसुतस्य) अपत्यमिति विग्रहः। एवमेव साहदेव इत्यस्य॥ १०-गणेश इत्यर्थः। अत्र 'तद्धितार्थ—' इति समासोत्तरं तद्धितप्रत्यय एवमुत्तरत्र॥ ११-कार्तिकेयः॥

स्त्रीप्रत्ययान्तेभ्यो ढक्। वैनतेयः[1]॥

**कन्यायाः कनीन च ४। १। ११६॥**

चादण्। कानीनो व्यासः कर्णश्च॥

**राजश्वशुराद्यत् ४। १। १३७॥**

(राज्ञो जातावेवेति[2] वाच्यम्)॥

**ये चाभावकर्मणोः ६। ४। १६८॥**

यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः। राजन्यः[3]। जातावेवेति किम्?—

**अन् ६। ४। १६७॥**

अन् प्रकृत्या स्यादणि परे। राजनः। श्वशुर्यः[4]॥

**क्षत्राद् घः ४। १। १३८॥**

क्षत्रियः। जातावित्येव। क्षात्रिरन्यत्र॥

**रेवत्यादिभ्यष्ठक् ४। १। १४६॥**

**ठस्येकः ७। ३। ५०॥**

अङ्गात्परस्य ठस्येकादेशः स्यात्। रैवतिकः॥

**जनपदशब्दात्क्षत्रियादञ् ४। १। १६८॥**

जनपद[5]क्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये। पाञ्चालः।

([6]क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्।) पञ्चालानां राजा पाञ्चालः। (पूरोरण् वक्तव्यः[7])। पौरवः। (पाण्डोर्ड्यण्)। पाण्ड्यः॥

---

१–विनतासुतो गरुडः॥ २–क्षत्रियात् स्वविवाहितायां क्षत्रियायामुत्पन्नसन्ताने एव यत्प्रत्ययो भवतीति भावः। वैश्यशूद्रजात्युत्पन्नकन्यामां क्षत्रियादुत्पन्नमपत्यं राजनः॥ ३–क्षत्रियजातिः॥ ४–श्यालः॥ ५–जनपदो जनपदनामधेयः शब्दो वाचको यस्य स जनपदशब्द इति बहुव्रीहिः। एवञ्च जनपदवाची सन् यः क्षत्रियवाची शब्दस्तत्प्रकृतिकात् षष्ठ्यन्तादपत्येऽर्थेऽञ्प्रत्ययः॥ ६–पञ्चालाङ्गवङ्गमगधकलिङ्गादयः शब्दा देशवाचिनो राजवाचिनश्च। तत्राद्ये बहुवचनान्ताः। अन्त्ये एकवचनान्ताः। यत्र च राजवाची तत्र 'पञ्चालस्य राज्ञोऽपत्यम्' इति विग्रहेऽपत्यप्रत्ययः। यत्र च देशवाची तत्र 'पञ्चालानां राजा' इति विग्रहे षष्ठीबहुवचनान्ताद्राजरूपार्थे प्रत्ययः॥ ७–अपत्ये राजनि चार्थे। एवमुत्तरत्रापि॥

**कुरुनादिभ्यो ण्यः ४। १। १७२॥**[1]

कौरव्यः। नैषध्यः॥

**ते तद्राजाः ४। १। १७४॥**

अञादयस्तद्राजसंज्ञाः स्युः॥[2]

**तद्राजस्य बहुषु तेनैवास्त्रियाम् २। ४। ६२॥**

बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम्। इक्ष्वाकवः। पञ्चालाः, इत्यादि॥

**कम्बोजाल्लुक् ४। १। १७५॥**

अस्मात्तद्राजस्य लुक्। कम्बोजः। कम्बोजौ। (कम्बोजादिभ्य इति वक्तव्यम्।) चोलः। शकः। केरलः। यवनः॥

इत्यपत्याधिकारः॥ २॥

---

१-कुरुशब्दान्नकारादिशब्दाच्च ण्यप्रत्ययः स्यादित्यर्थः॥ २-अपत्ये राजनि च विहिताः प्रत्ययास्तच्छब्देन परामृश्यन्ते तदाह— 'अञादयः' इति॥

# अथ रक्ताद्यर्थकाः

**तेन रक्तं रागात् ४। २। १॥**

[१]अण् स्यात्। रज्यतेऽनेनेति रागः। कषायेण रक्तं वस्त्रं काषायम्॥

**नक्षत्रेण युक्तः कालः ४। २। ३॥**

[२]अण् स्यात्। (तिष्यपुष्ययोर्नक्षत्राणि[३] यलोप इति वाच्यम्।) पुष्येण युक्तं पौषमहः॥

**लुबविशेषे ४। २। ४॥**

[४]पूर्वेणविहितस्य लुप् स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः॥

**दृष्टं साम ४। २। ७॥**

[५]तेनेत्येव। वसिष्ठेन दृष्टं वासिष्ठं साम॥

**[६]वामदेवाड्ड्यड्ड्यौ ४। २। ९॥**

वामदेवेन दृष्टं साम वामदेव्यम्॥

**पुरिवृतो रथः ४। २। १०॥**

[७]अस्मिन्नर्थेऽण् प्रत्ययो भवति। वस्त्रेण परिवृतो वास्त्रो रथः॥

**[८]तत्रोद्धृतममत्रेभ्यः ४। २। १४॥**

शरावे उद्धृतः शाराव ओदनः॥

**संस्कृतं भक्षाः ४। २। १६॥**

[९]ससम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा यवाः॥

---

१-रञ्जकद्रव्यवाचकात् तृतीयान्तात् 'रक्तम्' इत्यस्मिन् अर्थे 'अण्' इति स्पष्टः सूत्रार्थः॥ २-'प्राग्दीव्यतोऽण्' इत्यधिक्रियते। नक्षत्रवाचकात् तृतीयान्तात् 'युक्तः' इत्यर्थेऽण् स्यात् युक्तः कालश्चेत्॥ ३-नक्षत्राणि नक्षत्रविहितानि इत्यर्थः॥ ४-'नक्षत्रेण युक्तः कालः', 'अण्' इत्यनुवर्त्य षष्ठ्या विपरिणम्य व्याचष्टे—'पूर्वेण' इति॥ ५-'तेन रक्तम्' इत्यतोऽनुवर्त्याह—'तेनेत्येव' इति। तृतीयान्तात् 'दृष्टम्' इत्यर्थेऽण् दृष्टं प्रत्यक्षविषयीभूतं साम चेत्, इति सूत्रार्थः॥ ६-तृतीयान्ताद्वामदेवशब्दात् 'दृष्टम्' इत्यर्थे ड्यत्, ड्यश्च प्रत्ययौ भवतः, दृष्टं साम चेत्; इति सूत्रार्थः॥ ७-तृतीयान्तात् 'परिवृतः' इत्यर्थेऽण् परिवृतो रथश्चेदिति सूत्रार्थः॥ ८-अमत्रवाचकात् ससम्यन्तात् 'उद्धृतम्' इत्यर्थेऽण् स्यादिति सूत्रार्थः। शरावो मृण्मयपात्रम्॥ ९-'प्राग्दीव्यतोऽण्' इत्यधिक्रियते, 'तत्रोद्धृतम्—' इत्यतः 'तत्र' इति वर्तते॥

**सो[1]ऽस्य देवता ४। २। २४॥**

इन्द्रो देवताऽस्येति ऐन्द्रं हविः। पाशु[2]पतम्। बार्हस्पत्यम्॥

**शु[3]क्राद्घन् ४। २। २६॥**

शुक्रियम्॥

**सोमा[4]ट्ट्यण् ४। २। ३०॥**

सौम्यम्॥

**वाय्वृतुपित्रुषसो यत् ४। २। ३१॥**

वा[5]यव्यम्। ऋतव्यम्॥

**रीङ् ऋतः ७। ४। २७॥**

अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः। यस्येति च। पित्र्यम्। उष[6]स्यम्॥

**पितृव्यमातुलमातामहपितामहाः ४। २। ३६॥**

एते निपात्यन्ते। पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः। मातुः पिता मातामहः। पितुः पिता पितामहः॥

**तस्य समूहः[7] ४। २। ३७॥**

काकानां समूहः काकम्॥

**भि[8]क्षादिभ्योऽण् ४। २। ३८॥**

भिक्षाणां समूहो भैक्षम्। गर्भिणीनां समूहो गार्भिणम्। इह (भ[10]स्याढे तद्धिते)। इति पुंवद्भावे कृते—

---

१–'प्राग्दीव्यतोऽण्' इत्यधिक्रियते। प्रथमान्ताद् देवतोपाधिकात् समर्थात् 'अस्य' इत्यर्थेऽणादयः॥ २–पाशुपतमिति, 'अश्वपत्यादिभ्यश्च' इत्यण्। बार्हस्पत्यमिति, पत्युत्तरपदलक्षणो ण्यः॥ ३–'साऽस्य देवता' इत्यधिक्रियते। प्रथमान्तात् शुक्रशब्दात् 'देवतास्य' इत्यर्थे घन् प्रत्ययः स्यात्॥ ४–'प्रथमान्तात्' सोमशब्दात् 'देवतास्य' इत्यर्थे ट्यण् प्रत्ययः स्यात्॥ ५–प्रथमान्तेभ्यो वाय्वृतुपित्रुषस्शब्देभ्यः 'देवतास्य' इत्यर्थे यत् प्रत्ययः॥ ६–'उषःकालाभिमानिनी देवता अस्य' इति विग्रहः॥ ७–षष्ठ्यन्तात् 'समूहः' इत्यर्थेऽण् स्यादिति सूत्रार्थः॥ ८–षष्ठ्यन्तभिक्षादिभ्यः 'समूहः' इत्यर्थेऽण् इति सूत्रार्थः॥ ९–'अचित्तहस्ति—' इति प्रासस्य ठको बाधनायायमण्विधीयते॥ १०–ढभिन्ने तद्धिते परतो भस्य पुंवत् इति वार्तिकार्थः। पुंस्यपि गर्भसम्बन्धस्य वेदे निरूपितत्वेन भवत्येव गर्भिणीशब्दस्य भाषितपुंस्कत्वम्॥

**इनण्यनपत्ये ६। ४। १६४॥**

अनपत्यार्थेऽणि परे इन् प्रकृत्या[1] स्यात्। तेन नस्तद्धित इति टिलोपो न। युवतीनां समूहो यौवनम्[2]॥

**ग्रामजनबन्धुभ्यस्तल्[3] ४। २। ४३॥**

तलन्तं स्त्रियाम्। ग्रामता। जनता। बन्धुता (गजसहायाभ्यां[4] चेति वक्तव्यम्)। गजता। सहायता। (अह्नः[5] खः क्रतौ।) अहीनः॥

**अचित्तहस्तिधेनोष्ठक्[6] ४। २। ४७॥**

**इसुसुक्तान्तात्कः ७। ३। ५१॥**

इस्उस्उक्तान्तात्परस्य ठस्य[7] कः। साक्तुकम्। हास्तिकम्। धैनुकम्॥

**तदधीते[8] तद्वेद ४। २। ५९॥**

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ७। ३। ३॥**

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः[9] किं तु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः। व्याकरणमधीते वेद वा वैयाकरणः॥

**क्रमादिभ्यो[10] वुन् ४। २। ६१॥**

क्रमकः। पदकः। शिक्षकः। मीमांसकः॥

इति रक्ताद्यर्थकाः॥ ३॥

---

१-'प्रकृत्यैकाच्' इत्यतोऽनुवर्त्याह— 'प्रकृत्या' इति॥ २-पुंवद्भावेन तिप्रत्ययनिवृत्तौ 'नस्तद्धिते' इति टिलोपः प्रकृतिभावेन वार्यते। शत्रन्तयुवतीशब्दस्य तु 'यौवतम्' इति भवति॥ ३-'तस्य समूहः' इत्यधिकारसत्त्वेन षष्ठ्यन्तग्रामजनबन्धुभ्यः 'समूहः' इत्यर्थे 'तल्' इति सूत्रार्थः॥ ४-तल् 'समूहः' इत्यर्थे, इति वार्तिकार्थः॥ ५-'षष्ठ्यन्ताद् अहन्शब्दात् 'समूहः' इत्यर्थे खः, समूहःक्रतुसाधकश्चेदित्यर्थः। अहीनोऽहर्गणसाध्यसुत्याकः क्रतुः, अत्र 'नस्तद्धिते' इति टिलोपः॥ ६-'समूहः' इत्यर्थे॥ ७-'ठस्येकः' इत्यतः 'ठस्य' इत्यनुवर्ततेऽत आह—'ठस्य' इति॥ ८-द्वितीयान्तात् 'अधीते' इत्यर्थे 'वेद' इत्यर्थे वा उक्ता अणादयो वक्ष्यमाणाश्च प्रत्यया वा स्युः, इति सूत्रार्थः॥ ९-'मृजेर्वृद्धिः' इत्यतोऽनुवर्त्याह— 'न वृद्धिः' इति॥ १०-द्वितीयान्तक्रमादिभ्यः 'अधीते, वेद' इत्यर्थे वुन् इति सूत्रार्थः॥

# अथ चातुरर्थिकाः

[1] तदस्मिन्नस्तीति देशे तन्नाम्नि ४। २। ६७॥

उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः॥

[2] तेननिर्वृत्तम् ४। २। ६८॥

कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी॥

[3] तस्य निवासः ४। २। ६९॥

शिबीनां निवासो देशः शैबः॥

[4] अदूरभवश्च ४। २। ७०॥

विदिशाया अदूरभवं नगरं वैदिशम्॥

[5] जनपदे लुप् ४। २। ८१॥

जनपदे वाच्ये चातुरर्थिकस्य लुप्॥

[6] लुपि युक्तवद्व्यक्तिवचने १। २। ५१॥

लुपि सति [7] प्रकृतिवल्लिङ्गवचने स्तः। पञ्चालानां निवासो [8] जनपदः पञ्चालाः। कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः॥

वरणादिभ्यश्च ४। २। ८२॥

[9] अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः॥

[10] कुमुदनडवेतसेभ्यो ड्मतुप् ४। २। ८७॥

---

१, २, ३, ४—प्रथमान्तात् 'अस्मिन्नस्ति' इत्यर्थे, तृतीयान्तात् 'निर्वृत्तम्' इत्यर्थे, षष्ठ्यन्तात् 'निवासः' इत्यर्थे, 'अदूरभवः' इत्यर्थे च उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः; तन्नाम्ना देशप्रसिद्धिश्चेदिति क्रमेण सूत्रचतुष्टयार्थः॥ ५–'तदस्मिन्नस्ति' 'तेन निर्वृत्तम्' 'तस्य निवासः' 'अदूरभवश्च' इति सूत्रचतुष्टयमनुवर्त्याह—'चातुरर्थिकस्य' इति॥ ६–यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन प्रत्ययलुपि सति प्रकृतेरेव निवासरूपार्थाभिधानात् तदनुरोधेन पुंस्त्वैकवचने प्राप्तेऽतिदेशमाह॥ ७–युक्तशब्दः प्रकृतिवाची, व्यक्तिशब्दो लिङ्गवाचीत्याह—प्रकृतीति॥ ८–देशस्तु जनपदैर्व्याप्तो जनपदव्याप्यो नगरादिः। जनपदस्तु बहुनगरग्रामव्याप्तमण्डलाधिकरणस्थानम् इति विशेषः॥ ९–'जनपदे लुप्' इत्यतो 'लुप्' इति वर्तते। जनपदे पूर्वेण सिद्धत्वादाह—'अजनपदार्थः' इति॥ १०–'तदस्मिन्नस्ति' 'तेन निर्वृत्तम्' 'तस्य निवासः' 'अदूरभवश्च' इति चतुरर्थी अनुवर्तते॥

**झयः ८। २। १०॥**

झयन्तान्मतोर्मस्य वः। कुमुद्वान्[1]। नड्वान्॥

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८। २। ९॥**

मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च[2] यवादिवर्जितात्परस्य मतोर्मस्य वः। वेतस्वान्॥

**नडशादाड्ड्वलच् ४। २। ८८॥**

नड्वलः[3]। शाद्वलः[4]॥

**शिखाया वलच् ४। २। ८९॥**

शिखावलः[5]॥

इति चातुरर्थिकाः॥ ४॥

*****

१-'कुमुदाः सन्ति अस्मिन् देशे' इति विग्रहः॥ २-म् च अं च अनयोः समाहारः मं तस्मात् मात्, तस्य अधिकृत 'पदात्' इत्येतद्विशेषणत्वेन तदन्तविधिरित्याह— 'मवर्णावर्णान्तात्' इति। उपधात्वं चोपस्थितत्वान्मवर्णावर्णयोरेवेत्याह— 'मवर्णावर्णोपधात्' इति॥ ३-नडशब्दो धमनपर्यायः, यो हिन्दीभाषायाम् 'नरकट, नरकुल' इत्यादिनामभिर्व्यपदिश्यते। 'नडाः सन्ति अस्मिन्' इति नड्वलो नडप्रायो देशः॥ ४-'शादाः सन्ति अस्मिन्' इति शाद्वलो घासबहुलप्रदेशः॥ ५-निर्वृत्ताद्यर्थेऽस्य प्रयोगः। अदेशे तु मत्वर्थीय इति बोध्यम्॥

# अथ शैषिकाः

**शेषे ४। २। ९२॥**

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः[1] स्युः। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः। दृषदि पिष्टा दार्षदाः सक्तवः। चतुर्भिरुह्यं चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः[2]। 'तस्य विकारः' इत्यतः प्राक् शेषाधिकारः॥

**राष्ट्रावारपाराद्घखौ ४। २। ९३॥**

आभ्यां क्रमाद् घखौ स्तः शेषे। राष्ट्रे जातादिः राष्ट्रियः। अवारपारीणः। (अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्।) अवारीणः। पारीणः। पारावारीणः। इह[3] प्रकृतिविशेषाद् घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते॥

**ग्रामाद्यखञौ ४। २। ९४॥**

ग्राम्यः। ग्रामीणः॥

**नद्यादिभ्यो[4] ढक् ४। २। ९७॥**

नादेयम्। माहेयम्। वाराणसेयम्॥

**दक्षिणापश्चात्पुरसस्त्यक् ४। २। ९८॥**

दाक्षिणात्यः[5]। पाश्चात्त्यः। पौरस्त्यः॥

---

१-अणादय इति, प्राग्दीव्यतीयाः साधारणा उक्ता इत्यर्थः। वक्ष्यमाणाश्च 'शेषे' इत्यधिकारान्वयादिति बोध्यम्॥ २-राक्षस इत्यर्थः॥ ३-ननु 'राष्ट्रावार—' इत्यादिसूत्रेऽर्थानिर्देशात् 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति नियमात्ते घादयः स्वार्थ एव भवेयुरित्याशङ्कायामाह— 'इह' इति॥ ४-नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफरी खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी। (वडवाया वृषे।) इति नद्यादिः॥ ५-'दक्षिणादाच्' इति आजन्तो दक्षिणाशब्दोऽव्ययसंज्ञः परसाहचर्यात् न तु टाबन्तः। 'दक्षिणस्यामदूरे दक्षिणा तत्र जातादिः' इति विग्रहः। पश्चाद्भवः पाश्चात्त्यः। पुरो भवः पौरस्त्यः। 'पूर्वपौरस्त्यप्रथमाद्याः' इत्यमरः॥

**द्युप्रागपागुदक्प्रतीचो यत् ४। २। १०१॥** [1]

दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्॥

**अव्ययात्त्यप् ४। २। १०४॥**

(अमेहक्वतसित्रेभ्य एव) अमात्यः[2]। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। (त्यब्नेर्ध्रुव इति वक्तव्यम्।) नित्यः[3]॥

**वृद्धिर्यस्याचामादिस्तद्वृद्धम् १। १। ७३॥**

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात्॥

**त्यदादीनि च १। १। ७४॥**

वृद्धसंज्ञानि स्युः॥

**वृद्धाच्छः ४। २। ११४॥**

शालीयः। मालीयः। तदीयः। (वा नामधेयस्य वृद्धसंज्ञा वक्तव्या।) देवदत्तीयः, दैवदत्तः॥

**गहादिभ्यश्च ४। २। १३८॥**

गहीयः[4]॥

**युष्मदस्मदोरन्यतरस्यां खञ् च ४। ३। १॥**

चाच्छः। पक्षेऽण्। युवयोर्युष्माकं वायं युष्मदीयः, अस्मदीयः॥

**तस्मिन्नणि च युष्माकास्माकौ ४। ३। २॥**

युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च। यौष्माकीणः। आस्माकीनः यौष्माकः। आस्माकः॥

**तवकममकावेकवचने ४। ३। ३॥**

एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च। तावकीनः। तावकः। मामकीनः। मामकः। छे तु—

**प्रत्ययोत्तरपदयोश्च ७। २। ९८॥**

मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः। त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः॥

---

१–द्यौः स्वर्गे, प्राक् पूर्वदिशि, अपाक् प्रतीचौ पश्चिमदिशि, उदगित्युत्तरे। तत्र तत्र जातादिरिति विग्रहः स्वयमूहनीयः॥ २–मन्त्री॥ ३–नितरां भवः॥ ४–गहो देशविशेषस्तत्र जातादिः॥

**मध्यान्मः ४। ३। ८॥**

**मध्यमः॥**

**कालाट्ठञ् ४। ३। ११॥**

कालवाचिभ्यष्ठञ् स्यात्। कालिकम्। मासिकम्। सांवत्सरिकम्। (अव्ययानां भमात्रे टिलोपः)। सायम्प्रातिकः[1]। पौनःपुनिकः॥

**प्रावृष एण्यः ४। ३। १७॥**

प्रावृषेण्यः[2]॥

**सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४। ३। २३॥**

सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च। सायन्तनम्[3]। चिरन्तनम्। प्राह्णेप्रगे अनयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्[4]। प्रगेतनम्[5]। दोषातनम्[6]॥

**तत्र जातः ४। ३। २५॥**

सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः। स्रुघ्ने[7] जातः स्रौघ्नः। उत्से जात औत्सः[8]। राष्ट्रे जातो राष्ट्रियः[9]। अवारपारे जातः अवारपारीणः इत्यादि॥

**प्रावृषष्ठप् ४। ३। २६॥**

एण्यापवादः। प्रावृषिकः॥

**प्रायभवः ४। ३। ३९॥**

तत्रेत्येव[10]। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः॥

**सम्भूते[11] ४। ३। ४१॥**

---

१-सायंप्रातर्भवः। पुनःपुनर्भवः॥ २-वर्षाकाले भवः (जातार्थे तु ठकि प्रावृषिक इति रूपम्)॥ ३-साये भवं चिरे भवमिति विग्रहः। विभक्तिलुकि सति प्रत्ययसन्नियोगेन मान्तत्वं निपात्यते। स्वरादिपाठमनुसृत्य 'सायं भवम्, चिरं भवम्' इति च विग्रहः स्यात्॥ ४-पूर्वाह्णकालोत्पन्नमित्यर्थः॥ ५-प्रातःकालोत्पन्नमित्यर्थः॥ ६-रात्रिभवमित्यर्थः॥ ७-स्रुघ्नो देशविशेषः पाटलिपुत्रम् (पटना) इति विख्यातं नगरं स्रुघ्न इति पद्मचन्द्रकोषः॥ ८-'उत्सादिभ्यः—' इति अञ्। ९—'राष्ट्रावार—' इति घः॥ १०-सप्तम्यन्तसमर्थात् 'प्रायभवः' इत्यर्थेऽणादयो घादयश्च स्युः, इत्यर्थंफलितमाह—'तत्रेत्येव' इति॥ ११-अत्र 'नपुंसके भावे क्तः' सम्भूतं सम्भावना समावेशो वा॥

स्रुघ्ने संभवति स्रौघ्नः॥

**कोशाड्ढञ् ४। ३। ४२॥**

कौशेयं[1] वस्त्रम्॥

**तत्र[2] भवः ४। ३। ५३॥**

स्रुघ्ने भवः स्रौघ्नः। औत्सः। राष्ट्रियः॥

**दिगादिभ्यो यत् ४। ३। ५४॥**

दिश्यम्। वर्ग्यम्॥

**शरीरावयवाच्च[3] ४। ३। ५५॥**

दन्त्यम्। कण्ठ्यम्। (अध्यात्मादेष्ठञिष्यते)। अध्यात्मं भवमाध्यात्मिकम्॥

**अनुशतिकादीनां च ७। ३। २०॥**

एषामुभयपदवृद्धिर्ञिति[4] णिति किति च। आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। पारलौकिकम्। आकृतिगणोऽयम्॥

**जिह्वामूलाङ्गुलेश्छः ४। ३। ६२॥**

जिह्वामूलीयम्। अङ्गुलीयम्॥

**वर्गान्ताच्च[5] ४। ३। ६३॥**

कवर्गीयम्॥

**तत[6] आगतः ४। ३। ७४॥**

स्रुघ्नादागतः स्रौघ्नः॥

**ठगायस्थानेभ्यः[7] ४। ३। ७५॥**

---

१–कोशे भवमिति विग्रहः 'कौशेयं कृमिकोशोत्थम्' इत्यमरः॥ २–ससम्यन्तसमर्थात् 'भवः' इत्यर्थेऽणादयो घादयश्च स्युरित्यर्थः। भवजातयोरेकार्थत्वादन्यतरो व्यर्थ इति तु न शङ्कनीयम्, जात इत्यस्य उत्पन्न इति, भव इत्यस्य च विद्यमान इत्यर्थसत्त्वेन तयोर्भेदात्॥ ३–चकारात् 'दिगादिभ्यो यत्' इत्यतो 'यत्' इत्याकृष्यते॥ ४–'मृजेर्वृद्धिः' 'तद्धितेष्वचामादेः' 'उत्तरपदस्य' 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्यनुवृत्तिफलितमाह—'एषामुभयपदवृद्धिः' इति॥ ५–'जिह्वामूलाङ्गुलेश्छः' इत्यतः 'छः' इत्यनुवर्तते॥ ६–पञ्चम्यन्तसमर्थात् 'आगतः' इत्यर्थेऽणादयो घादयश्च स्युरित्यर्थः॥ ७–आयः स्वामिग्राह्यो भागः स यस्मिन् उत्पद्यते तदायस्थानम्, तद्वाचकात् पञ्चम्यन्तात् 'आगतः' इत्यर्थे ठक् प्रत्ययः॥

[१]शुल्कशालाया आगतः शौल्कशालिकः॥

**[२]विद्यायोनिसंबन्धेभ्यो वुञ् ४। ३। ७७॥**

औपाध्यायकः। पैतामहकः॥

**हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ४। ३। ८१॥**

समादागतं समरूप्यम्। पक्षे—गहादित्वाच्छः। समीयम्। विषमीयम्। देवदत्तरूप्यम्। दैवदत्तम्॥

**मयट् च ४। ३। ८२॥**

सममयम्। देवदत्तमयम्॥

**[३]प्रभवति ४। ३। ८३॥**

हिमवतः [४]प्रभवति हैमवती गङ्गा॥

**[५]तद्गच्छति पथिदूतयोः ४। ३। ८५॥**

स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा॥

**[६]अभिनिष्क्रामति द्वारम् ४। ३। ८६॥**

स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्॥

**[७]अधिकृत्य कृते ग्रन्थे ४। ३। ८७॥**

शारीरकमधिकृत्य कृतो ग्रन्थः शारीर[८]कीयः॥

**सोऽस्य[९]निवासः ४। ३। ८९॥**

स्रुघ्नो निवासोऽस्य स्रौघ्नः॥

---

१–शुल्कगृहादित्यर्थः॥ २–विद्याकृतो योनिकृतः संबन्धो येषां तद्वाचकात् 'आगतः' इत्यर्थे वुञ् स्यात्॥ ३–प्रभवः प्रथमप्रकाशस्तत्कर्तरि 'प्रभवति' इत्यर्थे पञ्चम्यन्तसमर्थादणादयो घादयश्च स्युरित्यर्थः॥ ४–प्रथमं प्रकाशते॥ ५–द्वितीयान्तात् 'गच्छति' इत्यर्थे प्रत्ययः स चेद् गन्ता पन्था दूतो वा। अत्र असिश्छिनत्ति इतिवत् करणस्य पथः कर्तृत्वविवक्षा। एवमुत्तरसूत्रे द्वारशब्दस्यापि॥ ६–द्वितीयान्तसमर्थात् 'अभिनिष्क्रामति' इत्यर्थेऽणादयो घादयश्च स्युः। अभिनिष्क्रमणकर्तृद्वारं चेदित्यर्थः॥ ७–द्वितीयान्तात् समर्थात् 'अधिकृत्य कृतो ग्रन्थः' इत्यर्थे प्रत्ययः॥ ८–'वृद्धाच्छः' इति छः॥ ९–प्रथमान्तसमर्थात् 'अस्य निवासः' इत्यर्थे प्रत्ययः। निवासो वासदेशः; अधिकरणे घञ्॥

**तेन[1] प्रोक्तम् ४। ३। १०१॥**

पाणिनिना प्रोक्तं पाणिनीयम्॥

**तस्येदम्[2] ४। ३। १२०॥**

उपगोरिदम् औपगवम्॥

इति शैषिकाः॥ ५॥

✿✿✿✿✿

# अथ विकारार्थकाः

**तस्य[3] विकारः ४। ३। १३४॥**

(अश्मनो विकारे टिलोपो वक्तव्यः)। अश्मनो[5] विकारः आश्मः। भास्मनः। मार्त्तिकः[6]॥

**अवयवे[7] च प्राण्योषधिवृक्षेभ्यः ४। ३। १३५॥**

चाद्विकारे। मयूरस्यावयवो विकारो वा मायूरः। मौर्वं[8] काण्डं भस्म वा। पैप्पलम्॥

**मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ४। ३। १४३॥**

प्रकृतिमात्रान्मयड्[9] वा स्याद् विकारावयवयोः। अश्ममयम्, आश्मनम्। अभक्ष्येत्यादि किम्? मौद्गः सूपः। कार्पासमाच्छादनम्॥

**नित्यं[10] वृद्धशरादिभ्यः ४। ३। १४४॥**

---

१-तृतीयान्तसमर्थात् 'प्रोक्तम्' इत्यर्थे प्रत्ययः॥ २-षष्ठ्यन्तात् समर्थात् 'इदम्' इत्यर्थेऽणादयः स्युः॥ ३-षष्ठ्यन्तात्समर्थात् 'विकारः' इत्यर्थे प्राग्दीव्यतीया अणादयः स्युः। विकारः कार्यम्॥ ४-'अन्' इति प्रकृतिभावेन टिलोपनिवृत्तौ टिलोपः प्रतिप्रसूयते॥ ५-पाषाणस्य॥ ६-मृत्तिकाया विकारः॥ ७-षष्ठ्यन्तेभ्यः प्राण्योषधिवृक्षेभ्योऽवयवे विकारे चाणादयः स्युः॥ ८-मौर्वमित्यत्र मूर्वाशब्द ओषधिविशेषस्य बोधकः, तस्य अवयवो विकारो वेत्यर्थः॥ ९-'एतत्' शब्देन 'तस्य विकारः' 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति, सूत्रोपात्तौ विकारावयवौ गृह्येते षष्ठ्यन्तसमर्थात् 'विकारावयवयोरर्थयोर्मयड् वा स्यात्' इति सूत्रार्थफलितमाह—प्रकृतिमात्रेति॥ १०-वृद्धसंज्ञकाच्छरादिगणपठिताच्च नित्यं मयट् स्याद् विकारावयवयोरित्यर्थः। शर, दर्भ, मृद्, कुटी, तृण, सोम, विल्वज'—इति शरादयः॥

आम्रमयम्। शरमयम्॥

**गोश्च[1] पुरीषे ४। ३। १४५॥**

गोः पुरीषं गोमयम्॥

**गोपयसोर्यत्[2] ४। ३। १६०॥**

गव्यम्। पयस्यम्॥

इति विकारार्थाः। (प्राग्दीव्यतीयाः)॥ ६॥

****

# अथ ठगधिकारः

**प्राग्वहतेष्ठक् ४। ४। १॥**

तद्वहतीत्यतः प्राक् ठगधिक्रियते॥

**तेन[3] दीव्यति खनति जयति जितम् ४। ४। २॥**

अक्षैर्दीव्यति खनति जयति जितो वा आक्षिकः॥

**संस्कृतम्[4] ४। ४। ३॥**

दध्ना संस्कृतं दाधिकम्। मारीचिकम्॥

**तरति[5] ४। ४। ५॥**

तेनेत्येव। उडुपेन तरति औडुपिकः॥

**चरति ४। ४। ८॥**

तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात्। हस्तिना चरति[6] हास्तिकः। दध्ना चरति[7] दाधिकः॥

---

१–'मयट्' इति वर्तते। पुरीषं न विकारः नाप्यवयव इति। संबन्धित्वं त्वव्याहतमिति भावः॥ २–'एतयोः' इत्यनुवृत्त्या विकारावयवयोरयं विधीयते मयटं बाधितुमिति भावः॥ ३–तृतीयान्तसमर्थात् 'दीव्यति खनति जयति जितम्' इत्येतेष्वर्थेषु ठक्, इति सूत्रार्थः॥ ४–तृतीयान्तसमर्थात् 'संस्कृतम्' इत्यर्थे ठक्। संस्कृतं संस्कारः स च सत उत्कर्षाधानरूपः॥ ५–तृतीयान्तसमर्थात् 'तरति' इत्यर्थे ठक्, इत्यर्थमाह—तेनेत्येवेति॥ ६–गच्छतीत्यर्थः॥ ७–भक्षयतीत्यर्थः॥

संसृष्टे[1] ४। ४। २२॥

दध्ना संसृष्टं दाधिकम्॥

उञ्छति[2] ४। ४। ३२॥

बदराण्युञ्छति[3] बादरिकः॥

रक्षति[4] ४। ४। ३३॥

समाजं रक्षति सामाजिकः॥

शब्ददर्दुरं[5] करोति ४। ४। ३४॥

शब्दं करोति शाब्दिकः[6]। दर्दुरं करोति दार्दुरिकः॥

धर्मं[7] चरति ४। ४। ४१॥

धार्मिकः। (अधर्माच्चेति वक्तव्यम्।) आधर्मिकः॥

शिल्पम्[8] ४। ४। ५५॥

मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः॥

प्रहरणम्[9] ४। ४। ५७॥

तदस्येत्येव। असिः प्रहरणमस्य आसिकः। धानुष्कः[10]॥

शीलम्[11] ४। ४। ६१॥

अपूपभक्षणं शीलमस्य आपूपिकः[12]॥

---

१–तृतीयान्तसमर्थात् 'संसृष्टम्' इत्यर्थे ठक्, संसृष्टे संसर्गाश्रये इत्यर्थः, संसर्गो मेलनम्॥ २–'तत्प्रत्यनुपूर्वम्—' इत्यतः 'तत्' इत्यनुवर्तते, तेन द्वितीयान्तसमर्थात् 'उञ्छति' इत्यर्थे ठक्॥ ३–बदर्याः फलानि बदराणि, तानि उञ्छति अवयवशो गृह्णाति इति विग्रहे ठक् प्रत्ययः॥ ४–द्वितीयान्तसमर्थात् 'रक्षति' इत्यर्थे ठक्॥ ५–द्वितीयान्तसमर्थात् शब्ददर्दुरशब्दात् 'करोति' इत्यर्थे ठक्॥ ६–वैयाकरणः॥ ७–द्वितीयान्तसमर्थाद् धर्मशब्दात् 'चरति' अनुतिष्ठति इत्यर्थे ठक्॥ ८–'तदस्य पण्यम्' इत्यतः 'तदस्य' इति सम्बन्धेन प्रथमान्तसमर्थात् 'शिल्पमस्य' इत्यर्थे ठक्। शिल्पं कलासु कौशलम्॥ ९–प्रथमान्त समर्थात् 'प्रहरणमस्य' इत्यर्थे ठक्। प्रह्रियतेऽनेनेति प्रहरणम् आयुधम्॥ १०–'इसुसुक्तान्तात् कः' इति ठस्य कादेशे 'इणः षः' इति विसर्गस्य षः॥ ११–प्रथमान्तसमर्थात् 'शीलमस्य' इत्यर्थे ठक्॥ १२–अपूपशब्दो लक्षणया अपूपभक्षणपरः॥

[१] **निकटे वसति ४। ४। ७३॥**

नैकटिको भिक्षुकः॥

इति ठगधिकारः। (प्राग्वहतीयाः) ॥ ७॥

*****

# अथ यदधिकारः

**प्राग्घिताद्यत् ४। ४। ७५॥**

तस्मै हितमित्यतः प्राग् यदधिक्रियते॥

[२] **तद्वहति रथयुगप्रासङ्गम् ४। ४। ७६॥**

रथं वहति रथ्यः। युग्यः। प्रासङ्ग्यः॥

[३] **धुरो यड्ढकौ ४। ४। ७७॥**

हलि चेति दीर्घे प्राप्ते—

**न भकुर्छुराम् ८। २। ७९॥**

भस्य कुर्छुरोश्चोपधाया इको दीर्घो न स्यात्। धुर्यः[४]। धौरेयः॥

[५] **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ४। ४। ९१॥**

नावा तार्यं[६] नाव्यं जलम्। [७]वयसा तुल्यो वयस्यः। धर्मेण प्राप्यं

---

१–'तत्र नियुक्तः' इत्यतः 'तत्र' इत्यधिकारे ससम्यन्तसमर्थात् निकटशब्दात् 'वसति' इत्यर्थे ठक्॥ २–द्वितीयान्तसमर्थेभ्यो रथयुगप्रासङ्गशब्देभ्यः 'वहति' इत्यर्थे यत्। रथ्योऽश्वादिः, स एव युग्यो युगशब्दस्य रथाङ्गवाचकत्वात्। कर्षणकाले वृषस्कन्धे यत्काष्ठमासज्यते स प्रासङ्गस्तं यो वहति स प्रासङ्ग्यो वृषभः॥ ३–द्वितीयान्तसमर्थाद् धुर् शब्दात् 'वहति' इत्यर्थे यत् ढक् च प्रत्ययौ॥ ४–धुर्यो भारवाहकः स एव धौरेयः॥ ५–'यत्' प्रत्ययः। अत्र सूत्रे प्रथममूलशब्दान्तं द्वन्द्वं विधाय द्वितीयमूलादितुलान्तद्वन्द्वं च, तयोः पुनर्द्वन्द्व इति व्याख्येयम्। अन्यथा मूलशब्दयोरेकशेषापत्तिः॥ ६–तरितुं शक्यम्॥ ७–वयसा तुल्यं मित्रमेव वयस्यः॥

धर्म्यम्[1]। विषेण वध्यो विष्यः[2]। मूलेन आनाम्यं मूल्यम्[3]। मूलेन समो मूल्यः[4]। सीतया[5] समितं सीत्यं क्षेत्रम्। तुलया संमितं[6] तुल्यम्॥

तत्र[7] साधुः ४। ४। ९८॥

अग्रे साधुः— अग्र्यः। सामसु साधुः सामन्यः। ये चाभावकर्मणोरिति प्रकृतिभावः। कर्मण्यः। शरण्यः॥

सभाया[8] यः ४। ४। १०५॥

सभ्यः॥

इति यतोऽवधिः । (प्राग्घितीयाः)॥ ८॥

१–धर्मफलम्॥ २–विषेण वधमर्हति॥ ३–यावता द्रव्येण वणिग्भिर्वस्त्रादि क्रीतं तन्मूलं मूलधनमित्यर्थः। तेन मूलेन आनाम्यमात्मानम्प्रति शेषीकर्तव्यम् (लाभाख्यो भागः) मूल्यम्। लोके लाभसहिते मूलधने मूल्यशब्दो रूढः॥ ४–मूलेन मूलभागेन समः सदृशो मूल्यः॥ ५–'सीता लाङ्गलपद्धतिः' इत्यमरः। सीतया समितं सङ्गतं कृष्टं सत् निम्नोन्नतत्वादिरहितं कृतमित्यर्थः॥ ६–सम्मितं परिच्छिन्नम्, तुल्यं सदृशपर्यायम्॥ ७–सप्तम्यन्तसमर्थात् 'साधुः' इत्यर्थे यत्। साधुः प्रवीणो योग्यो वा नोपकर्ता॥ ८–सप्तम्यन्तसमर्थात् सभाशब्दात् 'साधुः' इत्यर्थे यः प्रत्ययः॥

# अथ छयतोरधिकारः

**प्राक् क्रीताच्छः ५। १। १॥**

तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते॥

**उगवादिभ्यो यत् ५। १। २॥**

प्राक् क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत् स्यात्। छस्यापवादः। शङ्कवे हितं [1]शङ्कव्यं दारु। [2]गव्यम्। (नाभि नभं च)। [3]नभ्योऽक्षः। नभ्यमञ्जनम्॥

**[4]तस्मै हितम् ५। १। ५॥**

वत्सेभ्यो हितो वत्सीयो गोधुक्॥

**[5]शरीरावयवाद्यत् ५। १। ६॥**

दन्त्यम्। कण्ठ्यम्। [6]नस्यम्॥

**[7]आत्मन्विश्वजनभोगोत्तरपदात्खः ५। १। ९॥**

**आत्माध्वानौ खे ६। ४। १६९॥**

एतौ खे [8]प्रकृत्या स्तः। आत्मने हितम् आत्मनीनम्। विश्वजनीनम्। [9]मातृभोगीणः॥

इति छयतोरवधिः। (प्राक्क्रीतीयाः) ॥ ९॥



---

१–यत्प्रत्यये भत्वे 'ओर्गुणः' इति गुणे 'वान्तो यि प्रत्यये' इत्यनेन वान्तादेशे सिद्धम्। शङ्कव्यं कीलकोपकारकं काष्ठम्॥ २–गव्यमत्र गोनिमित्तकं घासादि बोध्यम्॥ ३–सच्छिद्रं रथाङ्गं नाभिः तदनुप्रविष्टः काष्ठविशेषोऽक्षः स च तदनुगुणत्वात्तस्मै हितः। अञ्जनम्—अभ्यञ्जनं तैलाभ्यङ्ग इत्यर्थः। तदपि स्नेहनत्वान्नाभये हितं भवति॥ ४–चतुर्थ्यन्तसमर्थात् 'हितम्' इत्यर्थे छः प्रत्ययः, उवर्णान्ताद् गवादिभ्यश्च तु 'यत्' प्रत्ययः ॥ ५–चतुर्थ्यन्तसमर्थात् शरीरावयवात् 'हितम्' इत्यर्थे यत्॥ ६–नासिकायै हितमिति विग्रहः। नस्यशब्देनाधुना संघ्रातव्यं तमालचूर्णादि बोध्यते॥ ७–चतुर्थ्यन्तसमर्थाद् 'आत्मन्विश्वजनभोगोत्तरपदात्' 'हितम्' इत्यर्थे खः॥ ८–'प्रकृत्यैकाच्' इत्यतोऽनुवर्त्याह 'प्रकृत्या' इति॥ ९–'मातुर्भोगः शरीरं तस्मै हितः' इति विग्रहः॥

# अथ ठञधिकारः

**प्राग्वतेष्ठञ् ५। १। १८॥**

तेन[1] तुल्यमिति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते॥

**तेन[1] क्रीतम् ५। १। ३७॥**

सप्तत्या क्रीतं साप्ततिकम्। प्रा[2]स्थिकम्॥

**सर्वभूमिपृथिवीभ्यामणञौ ५। १। ४१॥**

**तस्येश्वरः ५। १। ४२॥**

[3]सर्वभूमिपृथिवीभ्यामणञौ स्तः। अनुशतिकादीनां च। [4]सर्वभूमेरीश्वरः सार्वभौमः। पार्थिवः॥

**प[5]ङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ५। १। ५९॥**

एते रूढिशब्दा निपात्यन्ते॥

**तदर्हति ५। १। ६३॥**

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः॥

**[6]दण्डादिभ्यो यत् ५। १। ६६॥**

एभ्यो यत् स्यात्। दण्डमर्हति दण्ड्यः। अर्घ्यः। वध्यः॥

**तेन[7] निर्वृत्तम् ५। १। ७९॥**

अह्ना निर्वृत्तम् [8]आह्निकम्॥

इति ठञोऽवधिः। (प्राग्वतीयाः)॥ १०॥

---

१–तृतीयान्तसमर्थात् 'क्रीतम्' इत्यर्थे ठञ् प्रत्ययः॥ २–प्रस्थेन तत्परिच्छिन्नेन धान्येन क्रीतं शाकादि॥ ३–षष्ठ्यन्ताभ्यामाभ्यामेतौ स्तः 'ईश्वरः' इत्यर्थे॥ ४–अस्मिन् सूत्रे 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यनुवृत्तौ व्याख्यायोदाहरति—'सर्वभूमेरीश्वरः' इति॥ ५–पङ्क्तिशब्दो नानार्थः, क्रमसन्निवेशे ब्राह्मणपङ्क्तिः पिपीलिकापङ्क्तिः। दशसंख्यायाम्—पङ्क्तिरथो दशरथ इत्यर्थः। छन्दोविशेषे च भ्गौ गिति पङ्क्तिः। विंशत्याद्याः सङ्ख्यायां सङ्ख्येये चैकवचनान्ताः, विंशतिर्गावः गवां विंशतिरित्यादि॥ ६–द्वितीयान्तसमर्थेभ्यो दण्डादिभ्यः 'अर्हति' इत्यर्थे यत् प्रत्ययः॥ ७–तृतीयान्तसमर्थात् 'निर्वृत्तम् (निष्पन्नम्)' इत्यर्थे ठञ्॥ ८– 'अह्नष्टखोरेव' इति नियमेन 'नस्तद्धिते' इति टिलोपव्यावृत्तौ 'अल्लोपोऽनः' इत्यकारलोपः॥

# अथ त्वतलोरधिकारः

तेन[1] तुल्यं क्रिया चेद्वतिः ५। १। ११५॥

ब्राह्मणेन तुल्यं ब्राह्मणवत् अधीते। क्रिया चेदिति किम्? गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः॥

तत्र[2] तस्येव ५। १। ११६॥

मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः[3]। चैत्रस्येव चैत्रवन्मैत्रस्य गावः॥

तस्य[4] भावस्त्वतलौ ५। १। ११९॥

प्रकृति[5]जन्यबोधे प्रकारो भावः। गोर्भावो गोत्वम्। गोता। त्वान्तं क्लीबम्॥

आ च त्वात् ५। १। १२०॥

ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते। अपवादैः[6] सह समावेशार्थमिदम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रिया भावः—स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पौंस्नम्। पुंस्त्वम्। पुंस्ता॥

पृथ्वादिभ्य[7] इमनिज्वा ५। १। १२२॥

वावचनमणादि[8]समावेशार्थम्॥

र ऋतो हलादेर्लघोः ६। ४। १६१॥

हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेयस्सु परतः। पृथु[9]मृदुभृश-

---

१-तृतीयान्तात् 'तुल्यम्' इत्यर्थे वतिः स्यात्। 'यत् तुल्यं सा क्रिया चेत्' इति सूत्रार्थः॥ २-सप्तम्यन्तात् षष्ठ्यन्ताच्च 'इव' इत्यर्थे वतिः प्रत्ययः॥ ३-प्राकारश्चतुर्दिक्षु आवरणम्॥ ४-षष्ठ्यन्तसमर्थात् 'भावः' इत्यर्थे त्वतलौ प्रत्ययौ स्तः॥ ५-यस्माद् गवादिशब्दात्त्वतलौ क्रियेते स गवादिः प्रकृतिः, तज्जन्यबोधो गोत्वप्रकारकगोविशेष्यकस्तत्र यः प्रकारः विशेषणं गोत्वादिः स भावप्रत्ययार्थः। मुख्यविशेष्यतानिरूपितप्रकारताश्रय इति निष्कर्षः॥ ६-अयम्भावः, भावार्थप्रत्ययप्रकरणेऽग्रे इमनिजादयः प्रत्यया विधीयन्ते, ते च त्वतलोर्बाधका न भवेयुरित्येतदर्थमधिकारसूत्रम्। अत्रत्यचकारश्च 'स्त्रीपुंसाभ्याम्—' इति विहिताभ्यां नञ्स्नञ्भ्यां सह त्वतलोः प्रयोगसमावेशार्थ इति॥ ७-षष्ठ्यन्तसमर्थेभ्यः पृथ्वादिभ्यः 'भावः' इत्यर्थे इमनिच्॥ ८-अणादिरत्र प्रत्ययो न तु प्रत्याहारः॥ ९-'पृथु' प्रभृतिशब्दाः क्रमेण स्थूलकोमलप्रचुरदुर्बलप्रौढस्वामिवाचकाः॥

कृशदृढपरिवृढानामेव रत्वम्॥

**टेः ६। ४। १५५॥**

भस्य टेर्लोप इष्ठेमेयस्सु। पृथोर्भावः [1]प्रथिमा—

**इगन्ताच्च लघुपूर्वात् ५। १। १३१॥**

इगन्ताल्लघुपूर्वात् प्रातिपदिकाद्भावेऽण् प्रत्ययः। पार्थवम्। म्रदिमा, मार्दवम्॥

[2]**वर्णदृढादिभ्यः ष्यञ्च ५। १। १२३॥**

चादिमनिच्। शौक्ल्यम्। शुक्लिमा। दार्ढ्यम्। द्रढिमा॥

[3]**गुणवचनब्राह्मणादिभ्यः कर्मणि च ५। १। १२४॥**

चाद्भावे। जडस्य भावः कर्म वा जाड्यम्। मूढस्य भावः कर्म वा मौढ्यम्। ब्राह्मण्यम्। आकृतिगणोऽयम्॥

[4]**सख्युर्यः ५। १। १२६॥**

सख्युर्भावः कर्म वा सख्यम्॥

[5]**कपिज्ञात्योर्ढक् ५। १। १२७॥**

कापेयम्। ज्ञातेयम्॥

[6]**पत्यन्तपुरोहितादिभ्यो यक् ५। १। १२८॥**

सैनापत्यम्। पौरोहित्यम्॥

इति त्वतलोरधिकारः॥११॥

---

१-'पृथोर्भावः' इति विग्रहे 'पृथु अस्' इत्यस्मात् 'पृथ्वादिभ्य इमनिज्वा' इति विकल्पेनेमनिच् प्रत्यये तद्धितान्तत्वेन प्रातिपदिकत्वाद् विभक्तेर्लुकि 'र ऋतो हलादेर्लघोः' इति सूत्रेण ऋकारस्य रशब्दादेशे 'टेः' इति टेर्लोपे यथाप्राप्तशास्त्रकार्ये प्रथिमा, इमनिचोऽभावे 'इगन्ताच्च लघुपूर्वात्' इत्यण् प्रत्यये आदिवृद्धौ अन्यकार्ये पार्थवम्। त्वप्रत्यये पृथुत्वम्। तल्प्रत्यये च पृथुतेति रूपचतुष्टयम्। एवं 'म्रदिमा' इत्यादावपि ज्ञेयम्॥ २-षष्ठ्यन्तसमर्थेभ्यो वर्णवाचिभ्यो दृढादिभ्यश्च 'भावः' इत्यर्थे ष्यञ्, चकाराद् इमनिच्॥ ३-षष्ठ्यन्तसमर्थेभ्यो गुणवाचिभ्यो ब्राह्मणादिभ्यश्च 'भावः' 'कर्म' इत्यर्थे ष्यञ्। कर्म द्विविधम्—क्रिया कार्यं च। तत्र शरीरायासमात्रसाध्यं शौचादि क्रिया, शास्त्रेण विहितो यागादिः कार्यम् इत्यनयोर्भेदः॥ ४-षष्ठ्यन्तात् सखिशब्दाद् 'भावकर्मणोः' अर्थयोर्यः प्रत्ययः॥ ५- षष्ठ्यन्तसमर्थकपिज्ञातिशब्दाभ्यां 'भावकर्मणोः' अर्थयोर्ढक् प्रत्ययः॥ ६-षष्ठ्यन्तेभ्यः पत्यन्तशब्देभ्यः पुरोहितादिशब्देभ्यश्च 'भावकर्मणोः' अर्थयोर्यक् प्रत्ययः॥

# अथ भवनाद्यर्थकाः

[1] **धान्यानां भवने क्षेत्रे खञ् ५। २। १॥**

भवत्यस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्॥

[2] **व्रीहिशाल्योर्ढक् ५। २। २॥**

व्रैहेयम्। शालेयम्॥

**हैयङ्गवीनं संज्ञायाम् ५। २। २३॥**

ह्योगोदोहशब्दस्य हियङ्गुरादेशः विकारार्थे खञ्च निपात्यते। दुह्यत इति दोहः क्षीरम्। ह्योगोदोहस्य विकारः— हैयङ्गवीनं नवनीतम्॥

[3] **तदस्य संजातं तारकादिभ्य इतच् ५। २। ३६॥**

तारकाः संजाता अस्य तारकितं नभः। पण्डितः। आकृतिगणोऽयम्॥

[4] **प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५। २। ३७॥**

तदस्येत्यनुवर्तते। ऊरू प्रमाणमस्य-ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्॥

[5] **यत्तदेतेभ्यः परिमाणे वतुप् ५। २। ३९॥**

यत्परिमाणमस्य यावान्। तावान्। एतावान्॥

**किमिदंभ्यां वो घः ५। २। ४०॥**

आभ्यां वतुप् स्याद् वकारस्य घश्च॥

**इदंकिमोरीश्की ६। ३। ९०॥**

दृग्दृशवतुषु इदम् ईश् किमः किः। कियान्। इयान्॥

---

१-षष्ठ्यन्ताद्धान्यवाचिशब्दात् 'भवनं क्षेत्रम्' इत्यर्थे खञ् प्रत्ययः॥ २-षष्ठ्यन्तसमर्थव्रीहिशालिशब्दाभ्याम् 'भवनं क्षेत्रम्' इत्यर्थे ढक्। 'व्रीहीणां शालीनां भवनं क्षेत्रम्' इति विग्रहः॥ ३-प्रथमान्तेभ्यः संजातोपाधिकेभ्यः तारकादिशब्देभ्यः 'अस्य' इत्यर्थे इतच्। पण्डित इत्यस्य तु 'सदसद्विवेकिनी बुद्धिः पण्डा, सा संजातास्य' इति विग्रहः। एवं लज्जितः तृषितः पुष्पितः फलितः पुलकितो रोमाञ्चित इत्यादि॥ ४-प्रमाणे विद्यमानात् प्रथमान्तात् ' अस्य' इति निर्दिष्टे प्रमेयेऽर्थे त्रय एते प्रत्ययाः स्युः। तत्र परिच्छेदकमात्रे मात्रच्। आद्यौ द्वौ ऊर्ध्वमान एव तथा च भाष्यम्— 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति॥ ५-प्रमाणोपाधिकेभ्यः प्रथमान्तेभ्यः 'यद्-तद्-एतद्' शब्देभ्यः 'अस्य' इत्यर्थे वतुप्॥

**संख्याया अवयवे तयप्**[1] **५। २। ४२॥**

पञ्च अवयवा अस्य पञ्चतयम्॥

**द्वित्रिभ्यां तयस्यायज्वा ५। २। ४३॥**

द्वयम्। द्वितयम्। त्रयम्। त्रितयम्॥

**उभादुदात्तो नित्यम् ५। २। ४४॥**

उभशब्दात्तयपोऽयच् स्यात् स चाद्युदात्तः। उभयम्॥

**तस्य पूरणे**[2] **डट् ५। २। ४८॥**

एकादशानां पूरणः एकादशः॥

**नान्तादसंख्यादेर्मट् ५। २। ४९॥**

[3]डटो मडागमः। पञ्चानां पूरणः पञ्चमः। नान्तात्किम्? विंशः॥

**ति विंशतेर्डिति ६। ४। १४२॥**

विंशतेर्भस्य तिशब्दस्य लोपो डिति परे। विंशः[4]। असंख्यादेः किम्? एकादशः॥

**षट्कतिकतिपयचतुरां थुक् ५। २। ५१॥**

---

१–अवयवे वर्तमानसंख्यावाचकात् प्रथमान्तादवयविरूपेऽर्थे तयप् इत्यर्थः। अवयवी च कुत्रचिदनुद्भूतावयवभेदः समुदायस्तेन 'मुनित्रयम्' 'बहुतयं यूपम्' इत्यादि प्रयोगाः। कुत्रचिदुद्भूतावयवसमुदायः, यथा 'उभये देवमनुष्याः' इति॥ २–पूर्य्यतेऽनेनेति पूरणः, करणे ल्युट्, संख्येयार्थवाचिसंख्यावाचकात् प्रथमान्तात्पूरणेऽर्थे डट् प्रत्यय इति सूत्रार्थः। यस्मात्संख्यावाचिनः प्रत्ययविधिस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्यय इति निष्कर्षः। इदमत्र तत्त्वम्—पूरणार्थप्रत्ययो द्वित्वादि—संख्यावाचकेभ्यः शब्देभ्य एव न तु प्रथमसंख्यावाचकादेकशब्दात्, एकत्वसंख्यायाः संख्यान्तर-पूरकानपेक्षणात्। द्वितीयादिसंख्या तु संख्यान्तरपुरकापेक्षयैव प्रवर्तते, तस्या एकत्वादिसंख्यावैकल्ये द्वित्वादिसंख्यानवस्थानात्॥ ३–असंख्यादेर्नान्तशब्दाद्विहितस्य डटो मडागम इत्यर्थः॥ ४–'विंशतेः पूरणः' इति विग्रहे 'तस्य पूरणे—' इति डटि 'ति विंशतेः—' इति लोपविधानसामर्थ्येन तिमात्रस्य लोपे 'विंश अ' इति जाते 'असिद्धवदत्राभात्' इति तिलोपस्यासिद्धत्वात् 'यस्येति च' इति लोपाप्रवृत्तौ, 'अतो गुणे' इत्यकारयोः पररूपे सति 'विंशः' इति सिद्धम्॥

एषां थुगागमः स्याड्डुटि। षण्णां पूरणः षष्ठः। कतिथः। [1]कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डुट्। कतिपयथः। चतुर्थः॥

**द्वेस्तीयः ५। २। ५४॥**

डटोऽपवादः। द्वयोः पूरणो द्वितीयः॥

**[2]त्रेः संप्रसारणं च ५। २। ५५॥**

तृतीयः॥

**[3]श्रोत्रियंश्छन्दोऽधीते ५। २। ८४॥**

श्रोत्रियः। वेत्यनुवृत्तेश्छान्दसः॥

**पूर्वादिनिः ५। २। ८६॥**

[4]पूर्वं कृतमनेन पूर्वी॥

**[5]सपूर्वाच्च ५। २। ८७॥**

[6]कृतपूर्वी॥

**इष्टादिभ्यश्च ५। २। ८८॥**

इष्टमनेन [7]इष्टी। अधीती॥

इति भवनाद्यर्थकाः॥ १२॥

---

१–ननु 'षट्कति—' इति सूत्रेण डटस्थुगागमः क्रियते, डट् च संख्यावाचकादेव, 'कतिपय' शब्दस्तु न तथेत्यत आह—'कतिपय' इति। एवञ्च 'कतिपयानां पूरणः' इति विग्रहे ज्ञापकाड्डुटि तस्य थुगागमे 'कतिपयथः' इति सिद्धम्॥ २–त्रिशब्दात्तीयप्रत्ययस्तत्सन्नियोगेन त्रिशब्दस्य सम्प्रसारणञ्चेति सूत्रार्थः॥ ३–'छन्दोऽधीते' इति विग्रहे घन्प्रत्ययान्तः श्रोत्रियन्निति विकल्पेन निपात्यते। तदभावे छन्दश्शब्दात् 'तदधीते' इत्यर्थे छान्दसः इति रूपम्॥ ४–द्वितीयान्तपूर्वशब्दात् 'अनेन' इत्यर्थे इनिप्रत्ययः, इति सूत्रार्थे अनेनेति कर्तृरूपार्थस्य क्रियां विनान्वयानर्हत्वे कृतमित्यस्याध्याहारः। पूर्वमिति क्रियाविशेषणं तदाह—'पूर्वं कृतम्' इत्यादि॥ ५–सपूर्वात्पूर्वशब्दात् 'अनेन' इत्यस्मिन्नर्थे इनिरित्यर्थः॥ ६–अविवक्षितकर्मकात् कृधातोर्भावे क्प्रत्यये 'पूर्वं कृतमनेन' इति विग्रहे 'सह सुपा' इत्यनेन समासोत्तरम् 'सपूर्वाच्च' इति इनिप्रत्यये 'कृतपूर्वी' इति। अत्र किं कृतपूर्वीति कर्मण आकाङ्क्षायां कटादेरध्याहारः। एवं श्रुतपूर्वी वार्ताम्, भुक्तपूर्वी ओदनम्, इत्याद्युदाहरणं ज्ञेयम्॥ ७–यज्धातोर्भूते भावे क्तः। एवमुत्तरत्रापीङ्धातोर्बोध्यम्॥

# अथ मत्वर्थीयाः

**[१]तदस्यास्त्यस्मिन्निति मतुप् ५। २। ९४॥**

गावोऽस्यास्मिन्वा सन्ति गोमान्॥

**तसौ मत्वर्थे १। ४। १९॥**

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। गरुत्मान्। वसोः संप्रसारणम्। विदुष्मान्। ([२]गुणवचनेभ्यो मतुपो लुगिष्टः)। शुक्लो गुणोऽस्यास्तीति शुक्लः पटः। कृष्णः॥

**[३]प्राणिस्थादातो लजन्यतरस्याम् ५। २। ९६॥**

चूडालः। चूडावान्। प्राणिस्थात्किम्? शिखावान् दीपः। [४]प्राण्यङ्गादेव। [५]मेधावान्॥

**लोमादिपामादिपिच्छादिभ्यः शनेलचः ५। २। १००॥**

लोमादिभ्यः शः। लोमशः। लोमवान्। रोमशः। रोमवान्। पामादिभ्यो नः। [६]पामनः। (ग० सू०) अङ्गात्कल्याणे। [७]अङ्गना। (ग० सू०) लक्ष्म्या अच्च। [८]लक्ष्मणः। पिच्छादिभ्य इलच्। पिच्छिलः। पिच्छवान्॥

**[९]दन्त उन्नत उरच् ५। २। १०६॥**

---

१-सत्ताक्रियाकर्तृभूतात्प्रथमान्तात्समर्थात् 'अस्यास्मिन्वा' इत्यर्थे मतुप् प्रत्ययः। 'अस्ति' इत्यत्र पुरुषवचने न विवक्षिते, वर्तमानकालस्तु विवक्षित एव; अत एव 'गावोऽस्यासन्' इति विग्रहे 'गोमान्' इति न प्रयोगः। 'गोमानासीत्' इति प्रयोगस्तु तथाव्यवहारविषय आसीदित्यर्थकः॥ २-गुणे तद्वति च प्रसिद्धा ये शब्दाः शुक्लादयस्ते गुणवचनांस्तेभ्यः परस्य मतुपो लुगित्यर्थः। अत एव 'रूपवान् घटः' इत्यादौ मतुपो लुङ् न॥ ३-सत्ताक्रियाकर्तृभूतादाकारान्तात्प्राण्यङ्गवाचकाल्लज्वेत्यर्थः॥ ४-प्राणिवृत्तिमूर्तिमदङ्गवाचकादेवेत्यर्थः॥ ५-मेधाशब्दो बुद्धिपर्यायः॥ ६-विचर्चिकारोगयुक्त इत्यर्थः॥ ७-'कल्याणानि शोभनान्यङ्गानि यस्याः सा' इति विग्रहः। स्त्रीपर्यायवाच्यङ्गनाशब्दः॥ ८-लक्ष्मीशब्दस्याकारादेशो न प्रत्ययश्च। मत्वर्थे लक्ष्मीवान्, लक्ष्मणः। पिच्छशब्दो मयूरपक्षपर्यायः। 'पिच्छिलः पन्थाः' इत्यादिप्रयोगदर्शनात् पिच्छिलशब्दः पङ्कयुक्ताया आर्द्रभूमेर्वाचकोऽप्यस्ति॥ ९-उन्नतोपाधिकात्प्रथमान्ताद्दन्तशब्दान्मतुबर्थे उरच् प्रत्ययः॥

उन्नता दन्ताः सन्त्यस्य दन्तुरः।

**केशाद्वोऽन्यतरस्याम् ५। २। १०९॥**

केशवः। केशी। केशिकः। केशवान्। (अन्येभ्योऽपि दृश्यते)। मणिवः।[1] (अर्णसो लोपश्च)।[2] अर्णवः॥

**अत इनिठनौ ५। २। ११५॥**

दण्डी। दण्डिकः॥

**व्रीह्यादिभ्यश्च ५। २। ११६॥**

व्रीही। व्रीहिकः॥

**अस्मायामेधास्रजो विनिः ५। २। १२१॥**

यशस्वी। यशस्वान्। मायावी। मेधावी। स्रग्वी[3]॥

**वाचो ग्मिनिः ५। २। १२४॥**

वाग्ग्मी[4]॥

**अर्शआदिभ्योऽच् ५। २। १२७॥**

अर्शोऽस्य[5] विद्यते अर्शसः। आकृतिगणोऽयम्॥

**अहंशुभमोर्युस्[6] ५। २। १४०॥**

अहंयुः अहङ्कारवान्। शुभंयुस्तु शुभान्वितः॥

इति मत्वर्थीयाः॥ १३॥

❖❖❖❖

---

१-मणिरस्यास्तीति विग्रहः। मणिवो नागविशेषः॥ २-अर्णः शब्दाद् वप्रत्ययः सस्य लोपश्च मत्वर्थे। अर्णांसि जलानि सन्त्यस्मिन्निति अर्णवः समुद्रः॥ ३-मालाधारी॥ ४-इकारो नकारपरित्राणार्थः। चकारस्य कुत्वे जश्त्वे च कृते 'वाग्ग्मी वाग्ग्मिनौ' इत्यादौ द्वयोर्गकारयोः श्रवणं भवति। द्वित्वे तु त्रयाणाम्। 'मिनिः' इत्युक्ते तु द्वित्वे द्वयोस्तदभावे चैकस्यैव गकारस्य श्रवणं भवेत्। किञ्च 'प्रत्यये भाषायाम्' इति नित्यानुनासिकत्वं दुर्वारमिति केचित्। अन्ये तु 'वाचो ग्मिनिः' इति सूत्रस्य प्रथमान्ताद् वाच्शब्दान्मिनिप्रत्ययः चकारस्य गकारादेशश्चेत्यर्थः। अत्र गकारविधानसामर्थ्यात् 'प्रत्यये भाषायाम्' इति नानुनासिक इति वदन्ति॥ ५-अर्शः पायुरोगविशेषः॥ ६-'अहम्' 'शुभम्' इति विभक्तिप्रतिरूपके अव्यये॥

# अथ प्राग्दिशीयाः

**प्राग्दिशो विभक्तिः ५। ३। १॥**

दिक्छब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः॥

**किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ५। ३। २॥**

किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते॥

**पञ्चम्यास्तसिल् ५। ३। ७॥**

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात्॥

**कु तिहोः ७। २। १०४॥**

किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः। कुतः[1], कस्मात्॥

**इदम इश् ५। ३। ३॥**

प्राग्दिशीये परे। इतः[2]॥

**अन्[3] ५। ३। ५॥**

एतदः प्राग्दिशीये। अनेकाल्त्वात्सर्वादेशः। अतः[4]। अमुतः। यतः। ततः। बहुतः। द्व्यादेस्तु द्वाभ्याम्॥

**पर्यभिभ्यां च ५। ३। ९॥**

आभ्यां तसिल् स्यात्। परितः। सर्वत इत्यर्थः। अभितः। उभयत इत्यर्थः॥

**सप्तम्यास्त्रल्[5] ५। ३। १०॥**

कुत्र[6] । यत्र। तत्र। बहुत्र॥

---

१-'कस्मात्' इति विग्रहे 'किम् ङसि' इत्यस्मात् 'पञ्चम्यास्तसिल्' इति तसिल-प्रत्यये तद्धितान्तत्वात्प्रातिपदिकत्वेन सुपो लुकि 'कु तिहोः' इति कुभावे स्वरादिपाठेन तसिलन्तस्याव्ययत्वेन तद्धितान्तादागतस्य सुपो लुकि रुत्वादिकार्ये सिद्धम्। एवम् 'काभ्याम्, केभ्यः, कस्याः' इत्यादिविग्रहेष्वपि तदेव रूपम्॥ २-'अस्मात्' इति विग्रहः॥ ३-एतदः स्थाने 'अन्' इत्यादेशः प्राग्दिशीये परे॥ ४-'अतः' इत्यत्र अनो नस्य 'नलोपः प्रातिपदिकान्तस्य' इति लोपः। 'एतस्मात्, अमुष्मात्, यस्मात्, तस्मात्, बहुभ्यः' इति क्रमेणैषां विग्रहः। 'अमुतः' इत्यादिषु तसिलः 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञकत्वेन 'त्यदादीनामः' इत्यत्वम्॥ ५-सप्तम्यन्तेभ्यः किमादिभ्यस्त्रल् स्यात्स्वार्थे॥ ६-'कस्मिन्, यस्मिन्, तस्मिन्, बहुषु' इत्येष क्रमेणैषां विग्रहः। कुत्रेत्यादित्रयाणां देशार्थ एव प्रयोगः, बहुत्रेत्यस्य तु कालेऽपीति बोध्यम्॥

**इदमो हः ५। ३। ११॥**

त्रलोऽपवादः। इह[1]॥

**किमोऽत् ५। ३। १२॥**

वाग्रहणमपकृष्यते[2]। सप्तम्यन्तात्किमोऽद्वा स्यात् पक्षे त्रल्॥

**क्वाति ७। २। १०५॥**

किमः क्वादेशः स्यादति। क्व। कुत्र[3]॥

**इतराभ्योऽपि दृश्यन्ते ५। ३। १४॥**

पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रहणाद्भवदादियोग एव। स भवान्। ततो भवान्। तत्र भवान्। तं भवन्तम्। ततो भवन्तम्। तत्र भवन्तम्। एवं[4] दीर्घायुः, देवानाम्प्रियः, आयुष्मान्॥

**सर्वैकान्यकिंयत्तदः काले दा ५। ३। १५॥**

सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्॥

**सर्वस्य सोऽन्यतरस्यां दि ५। ३। ६॥**

दादौ प्राग्दिशीये सर्वस्य सो वा स्यात्। सर्वस्मिन् काले सदा। सर्वदा। अन्यदा। कदा[5]। यदा। तदा। काले किम्? सर्वत्र देशे॥

**इदमो र्हिल् ५। ३। १६॥**

सप्तम्यन्तात् काल इत्येव॥

**एतेतौ रथोः ५। ३। ४॥**

इदम् शब्दस्य एत इत् इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे। अस्मिन् काले एतर्हि। काले किम्? इह देशे॥

---

१-'अस्मिन्देशे' इति विग्रहे हप्रत्यये इदम इशादेशे साधु॥ २-'वा ह चच्छन्दसि' इत्यस्मात्सूत्रादिति शेषः॥ ३-'कस्मिन् देशे' इत्युभयत्र विग्रहः॥ ४-भवदादियोग एवेत्युक्तम्, तत्रादिपदार्थमाह—एवं दीर्घायुः, देवानाम्प्रिय इत्यादि। यथा—स दीर्घायुः, ततो दीर्घायुः, तत्र दीर्घायुः। एवमग्रेऽपि॥ ५-'कस्मिन् काले' इति विग्रहे 'सर्वैकान्य—' इति दा प्रत्यये 'प्राग्दिशो—' इति विभक्तिसंज्ञायाम् 'किमः कः' इति कादेशे सिद्धम्॥

